Vol. XVI No. 2

# BULLETIN OF THE GOVERNMENT ORIENTAL MANUSCRIPTS LIBRARY MADRAS

EDITED BY

A. A. RAMANATHAN, M.A., L.T.

*Curator, Government Oriental Manuscripts Library, Madras*

1964

*Price Rs. 2*

# Table of Contents


| | | PAGE |
|---|---|---|
| 1. | Jyotiṣa Phalaratnamālā (Sanskrit) | 1 |
| 2. | Virālimalai Vēlavar Kātal (Tamil) | 69 |
| 3. | Sultānut Tawārikh (Persian) | 99 |

# JYOTIṢA PHALARATNAMĀLĀ

OF

# KṚṢṆA MIŚRA

Edited by

Sri A. A. RAMANATHAN, M. A., L. T.,

and

Sri T. H. VISWANATHAN,

The present work which has been taken for publication for the first time, is a minor treatise, dealing with predictions relating to the duration and certain other important incidents of human life, supposed to be caused to a person by the influence of certain planets, when they happen to occupy certain positions at the time of his birth. The predictions made herein are based on Jaiminisutras. The work is written in a variety of metres and consists of 28 adhyāyas though it is mentioned in the beginning of the work as having 30 adhyāyas. Some portions are in prose also. Various daśas and lagnas are prescribed here in order to find out the good or bad result as accurately as possible and this seems to be the main aim of this author. In his conclution the author says that he has dealt with the subject very briefly and that further details can be known from the commentary on Jaiminisūtras called Jyothiṣa kalpalatā of his son, Somanātha Miśra.

The author of this work is one Kṛṣṇa miśra. He is the son of Paramānanda and the grandson of Rāmadīkṣita of Kutsagotra. He was well-versed in Nyāyavaiśeṣika, Vyākaraṇa, Sāhitya and Saṅgīta. He mentions his other work Kṛṣṇīyam, a work in divination here Vide 5th stanza of VI Adhyāya. He has composed two other works with the names Kālasarvasva and Alaṅkārasudhākara, a commentary on Sāhityaratnākara. It is understood from the colophons of these works that he was having the title Mahāmahopādhyāya.

The author mentions a work Daivajñacūḍāmaṇi and frequently refers to one Sarvajñaguru. The time of this author is not known. It appears that this author and his ancestors lived in Oriya district. It is also possible that the mother tongue of this author may be Tamil, since he uses the word Buddhisālī instead

of Buddhimān in the sense of a clever person. Vide 20th stanza of XI Adhyaya. He also mentions one Vānchināthan who is supposed to be the author of the work Vāncināthiyam or Bhāvadarpaṇam. The author salutes one Siddheśa along with Rāma who may apparently be his grandfather. This author is different from the well-known Kṛṣṇamiśra author of the philosophical drama Prabodhacandrodaya, different also from Kṛṣṇamiśra the author of the commentary Kalpalatāvatāra on Bhāskarācarya's Bījagaṇita.

This publication is based on the following manusripts.

1. D. 13828 palm leaf - Grantha - Complete This is Termed as क
2. R. 12343 palm leaf - Grantha - Incomplete ,, ख
3. D. 13830 palm leaf - Telugu - Complete ,, ग
4. D. 13829 Paper - Telugu - Incomplete ,, घ
5. R. 15665 palm leaf - Grantha - Incomplete ,, ङ
6. R. 12315 palm leaf - Grantha - Complete ,, च

॥ श्रीः ॥

# ॥ ज्योतिषफलरत्नमाला ॥

## कृष्णमिश्रविरचिता

[1]श्रीविक्रमार्को जगतीतलेऽस्मिन् जीयान् मनुप्रख्ययशा नरेन्द्रः ।
पुपोष यः कोटिसुवर्णतो मां सबान्धवं सप्तति वत्सराणि ॥

तत्राध्यायास्त्रिंशद् ग्रन्थमितिसंख्यया पुनर्द्विसाहस्रम् ।
नानावृत्तविचित्रं कुर्मः श्रीविक्रमार्कनृपकीर्त्यै ॥

करबदरसमानं शास्त्रमेतद्विपश्चिन्
नियतमपि विलोच्य श्रेयसे यन्नराणाम् ।
यदि वदति तदानीं देवतुल्यो मनुष्यः
परमशिवपदं च प्राप्नुयादन्त्यकाले ॥

[2]मुनिवरकृतहोराकाननेषु स्वबुद्ध्या-
प्यनधिगतफलत्वात्प्राप्त(प्य)सौख्यं मनुष्यम् ।
स्फुटतरफलरत्नैर्भूषयन् कर्णदेशे
जयति जगति विद्याभूषणः कृष्णमिश्रः ॥ १ ॥

मेषाद्याः प्रथिताः क्रमेण मुनिभिः प्रोक्तास्तथा राशयः
खेटाश्चात्र तु कथ्यतेंऽशकविधिः संक्षेपतः कारकाः ।
पूर्वस्मिन् चरभाद्भवेद् ग्रहपराधीशक्रमेण द्विधा
भागाः स्युस्स्थिरभे तथोभयगृहे पूर्वैर्मुनीन्द्रैर्मतम् ॥ २ ॥

अथ प्रकारान्तरेण भागानयनम्

चरभे चरभात्स्थिरभे नवमात्
सुतभादुभये मुनयोऽपि जगुः ।
विषमात्क्रमतो विपरीतमथो
विदुरंशककल्पनमत्र बुधाः ॥ ३ ॥

---

1. च. श्लोकत्रयमत्रैवोपलभ्यते   2. ग. अयं श्लोको नोपलभ्यते

द्रगाणकूलतिश्वरभाग्वराणां
गृहाधिपे युग्मगते स्थिराद्धि ।
व्ययं समारभ्य तथोभयस्थिते
तदादि सन्तः प्रवदन्ति नित्यम् ॥ ४ ॥

राशीश्वरः स्यात् प्रथमो द्वितीयो
भागाधिपो लग्नपतिस्तृतीयः ।
चन्द्रश्चतुर्थो ग्रहनायको वे-
त्येवं हि योगे फलकारकाः स्युः ॥ ५ ॥

स्वलग्नपादष्टमगस्तदाद्यः
फणीनपुत्रौ हि तथा द्वितीयौ ।
चन्द्रो धराजस्तदनु(त)स्तृतीयौ
निर्याणकाले फलकारकाः स्युः ॥ ६ ॥

दशाविधौ तत्तदधीश्वराः स्युः
फलप्रदा मेषचतुष्टयस्य ।
तथा स्थिराणां रिपुगेहनाथाः
केन्द्राधिपाश्चोभयमन्दिरस्य[1] ॥ ७ ॥

तथोडुदाये मुनिभिः प्रणीता
ये कारकास्ते युजि तत्क्रमेण ।
अन्यत्र तु स्याद्विपरीतमेव
नक्षत्रनाथे विषमान्यसंस्थे ॥ ८ ॥

[2]पदं विलग्नाधिपतेर्वदन्ति
प्रधानमन्ये तु विलग्नराशेः ।
बलाबलं दैवविदूह्य पश्चात्
पदं विनिर्दिश्य[3] वदेद्यथार्थम् ॥ ९ ॥

1. च. रे स्युः 3. घ. विनिश्चित्य
2. क. ख. पूर्वोत्तरार्धे विपर्यस्ते ।

पदप्रवृत्तिर्न च राहुतः स्यात्
बलाधिकाच्चापि न केतुतश्च ।
धरासुतश्चार्कसुतोऽप्यधीशौ
दशाविपाके बलवानधीशः ॥ १० ॥

खेटे तथा स्वर्क्षगते चतुर्थं
पदं भवेत् सप्तमगे च रिःफम् ।
अन्यत्र च स्वर्क्षगते तदेव
पदं विलग्नाधिपतेर्वदन्ति ॥ ११ ॥

चन्द्रो यदा कर्किणि संस्थितः स्यात्
राशीश्वरो लग्नपतिः [1]तदा स्यात् ।
तत्रैव जातस्य नरस्य केन्द्र-
त्रिकोणकेतौ (शौ) बलिनौ हि तेन[2] ॥ १२ ॥

उच्चाधिनेत्रापि युतस्तथोच्चः
नीचेन युक्तोऽपि तथैव नीचः ।
भावेशयुक्तोऽपि च राहुयुक्तो
बलव्यपेतस्सखगोऽत्र[3] शास्त्रे ॥ १३ ॥

बलाधिकाः स्वर्क्षगताः खगाः स्युः
तत्रापि चन्द्रेण युता बलिष्ठाः ।
नीचारियुक्ता विबलास्तथास्तं-
गताश्च सूक्ष्मस्थितिमाश्रिताश्च ॥ १४ ॥

मेषत्रिकोणे बलवान् रविः स्यात्
कीटे तथा मन्त्रिगृहे विशिष्य ।
बुधस्य गेहे तु कदाचिदाहु-
रन्यत्र राशौ स बलव्यपेतः ॥ १५ ॥

---

1. घ. तथैव.
2. च. बलवान् हि नेता नेता=कारकः
3. च. ग. खचरोऽत्र

चन्द्रो [1]भृगोः स्वर्क्षगतो [2]गुरोश्च
गृहे बली भार्गवमन्त्रियुक्तः ।
मध्योऽर्कपुत्रस्य गृहे बली स्यात्
भौमज्ञसूर्यर्क्षगतो युतश्च[3] ॥ १६ ॥

भौमो बली स्वर्क्षगतोऽपि[4] जीव-
[5]निशेशयुक्तश्च तदीयगेहे ।
मध्योऽर्कयुक्तो विबलोऽन्यथा स्यात्
इतीव सर्वज्ञमते वदन्ति ॥ १७ ॥

बुधस्तथा स्वर्क्षगतो दिनेश-
मुक्तो बली शोभनखेटयुक्तः ।
मध्यः कुजक्षीणसुधांशुयुक्तः
परत्र दौर्बल्यमुशन्ति सन्तः ॥ १८ ॥

गुरुः शुभः क्षीणसुधांशुशुक्र-
भुजङ्गमानां युतिमन्तरेण ।
मध्यस्तथा भौमतदीयगेहे
परत्र दौबर्ल्यमुशन्ति सन्तः ॥ १९ ॥

शुक्रो बलीयान् खचराधिनेतृ-
कन्यायुतिं चास्तमनं विनैव ।
क्रूरेण युक्तोऽपि बुधेन मध्यः
फणीन्द्रयुक्तो मरणे बलीयान् ॥ २० ॥

शुक्रर्क्षगः स्वर्क्षगतो बलीयान्
शनिस्सुराचार्यगृहे बुधस्य ।

---

1. च. गुरु—ग. गुरोः
2. च. भृगोश्च
3. घ. स्यात्
4. ङ. ज्ञजीव
5. घ. शशिज्ञ

गृहे च मध्यो विबलोऽन्यथा स्यात्
योगे ग्रहाणामपि तद्वदेव ॥ २१ ॥

राहुस्सदा क्रूरयुतो बलीयान्
शुक्रेण युक्तोऽपि तथैव मध्यः ।
सदापि राहुर्मरणे बलीयान्
बलस्य हानिः न कदापि तस्य ॥ २२ ॥

**॥ इति श्रीबालात्रिपुरसुन्दरीकृपाकटाक्षसमधिगत समस्त-विद्यावैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्न-मालायां प्रथमोऽध्यायः ॥**

ओजे विलग्ने तु तदेव लग्नं
युग्मे तु तत्सन्मुखमामनन्ति ।
तत्रापि [1]तत्सप्तमयोर्बलानि
निर्णीय विद्वान् प्रवदेत् फलानि ॥ १ ॥

एवं गृहीतादपि लग्नभावात्
पदं समानीय सदा विपश्चित् ।
ऐश्वर्यमायुश्च विभज्य काले
वदेद्यत्नेन दृढं सभासु ॥ २ ॥

पदे शुभानामपि संयुतिं च
केन्द्रे शुभानामपि संयुतत्वम् ।
व्ययत्रिकोणेषु च राहुयोगं
विना स्थितार्थं[2] शुभयोगमाहुः ॥ ३ ॥

पदं समानीय विचक्षणेन
प्रदक्षिणेनैव विचारणीयः ।
भावा नयुग्मे च तदन्यथा स्युः
पदक्रमोऽयं विबुधैः प्रणीतः ॥ ४ ॥

---

1. च. न्मुखयोर्बलानि  2. च. तः स्यात् शुभ-

पदे तथा क्रूरगृहे शुभेन
 ग्रहेण दृष्टेऽप्यशुभाय भावि ।
शुभे तथा शोभनखेचरेण
 दृष्टे शुभत्वं समुदाहरन्ति ॥ ५ ॥

[1]पदाश्रये शोभनखेचराणां
 योगे भवेद्राजसमानयोगः ।
अन्यत्र शुक्रादपि रात्रिनाथा-
 ज्जीवादपि स्यात् विपरीतमेव ॥ ६ ॥

लाभे पदाच्चन्द्रगुरू भुजङ्ग-
 युक्तौ तदाहुः निधिलाभमार्याः ।
एको भृगुश्चन्द्रयुतो यदि स्यात
 भवेन्नरेशाद्धनलाभ एव ॥ ७ ॥

लाभे बुधार्कौ[2] भुजगेन दृष्टौ
 देवालयक्षीणगृहेषु तद्वत ।
भौमेन भूमावघटेषु केतोः
 चन्द्राज्जलेष्वित्यवदन् मुनीन्द्राः ॥ ८ ॥

रवौ तथा भौमगृहे पदस्य
 लाभे स्थिते भ्रातृधनस्य लाभः ।
जीवस्य गेहे तु सुताद्धनाप्तिः
 बुधस्य तु ज्ञातिधनं वदन्ति ॥ ९ ॥

चन्द्रार्किगेहे स्वभुजार्जितं स्यात्
 अन्यत्र राज्ञो धनलाभ एव ।
क्रूरैर्युते नीचगतेऽप्यमार्गात्
 शुभैर्युते स्वोच्चगते सुमार्गात् ॥ १० ॥

---

1. घ. ख. पदाद्वधये । 2. च. कौं

[1]चन्द्रो बलीयेन (लिष्ठेन) युतोऽपि यस्य
गेहे स एव प्रभवेत् फलाय ।
[2]दिनेशयुक्तोऽप्यथवापि नीचो
धनव्ययायैव भवेन्नितान्तम् ॥ ११ ॥

भौमो बली लाभगतस्तथैव
क्रूरैर्युतो स्वल्पधनप्रदाता ।
क्षेत्रक्रमात् भ्रातृसुतादिकायात्
वदन्ति लाभं यवनाः स्वगेहे ॥ १२ ॥

शुक्रस्य राज्ञः सचिवस्य पुत्रात्
रवेः पितुश्चन्द्रमसः कलत्रात् ।
बुधस्य तु ज्ञातिधनं फणीन्द्रात्
चौर्येण केतोः मुनयो वदन्ति ॥ १३ ॥

चन्द्रार्कजौ राहुगुरू कुजार्की
ध्वजार्कपुत्रौ यदि चोक्तरीत्या ।
स्थिताः तदानीं नियतं नराणां
लाभे पदान्नीचधनप्रदाः स्युः ॥ १४ ॥

नीचस्थिताः शोभनखेचरेन्द्राः
युक्ताः तदा म्लेच्छधनप्रदाः स्युः ।
राहुः शुभक्षेत्रगतस्तथैकः
केतुस्तथा क्रूरगतस्तथैव ॥ १५ ॥

नीचोच्चगैश्चन्द्रसुतस्तथैव
क्रूरैर्युतो म्लेच्छधनप्रदाता ।
गुरुर्यदा नीचगतः तदंशे
द्रेक्काणगो म्लेच्छधनप्रदाता ॥ १६ ॥

---

1. च. न्द्रेण नीचेन 2. च. नीचेश

भौमो भुजङ्गेन दिनेश्वरेण
नीचेन चण्डालधनप्रदाता ।
बुधोऽपि शीतांशुवदेव येन
युतो भवेत्तद्वदिति प्रसिद्धिः ॥ १७ ॥

स्वक्षेत्रगो जीवयुतस्तथैको
विद्याविवादेन धनं ददाति ।
पदस्य लाभे यदि भौमगेहे
गुरुर्यदि द्रव्यकरो नराणाम् ॥ १८ ॥

शुक्रस्य गेहे तु वधूधनाप्तिः
बुधस्य गेहे निजविद्ययैव ।
राज्ञो धनं चन्द्रदिनेशगेहे
सेवाधनं सूर्यसुतस्य गेहे ॥ १९ ॥

वाणिज्यतो भौमगृहे स्वगेहे
भृगुर्बुधर्क्षे कृषितो वदन्ति ।
निक्षेपतः[1] सौरिगृहे रवीन्दु-
गेहे नृपाल्लाभमुदीरयन्ति ॥ २० ॥

भौमर्क्षसंस्थोऽर्कसुतः कुवृत्त्या
शुक्रर्क्षसंस्थो धनदो नृपस्य ।
ज्ञगेहगो देवधनप्रदाता
चन्द्रार्कगेहे कृषिलाभदाता ॥ २१ ॥

गुरोर्गृहे ब्रह्मधनापहर्ता
स्वक्षेत्रगे सेवकदायहारी ।
ध्वजस्य गेहे तु गुरुस्वहारी
म्लेच्छस्वजीवी फणिराजगेहे ॥ २२ ॥

---

1. च. चारि

एको बली कुण्डलिनां वरेण्यः
राज्यार्घमेव प्रदिशत्यजस्रम् ।
शुक्रेण युक्तश्च दिनेशयुक्तः
तथैव नो चेद्विपरीतमेव ॥ २३ ॥

न्याय्यं धनं क्रूरगृहे भुजङ्गे
विपर्ययं सौम्यगृहे [1]ददाति ।
एवं ध्वजस्यापि विचार्य विद्वान्
फलं वदेन्नो वितथं कदापि ॥ २४ ॥

केन्द्रस्थिताः सौम्यखगाः शुभाय
क्रूरा ग्रहा दुष्टफलप्रदाः स्युः ।
द्रष्टा व्ययस्य प्रबलोऽपि खेटः
पदाद्विरोधीति वदन्ति सन्तः ॥ २५ ॥

केन्द्रस्थितो वा निधनस्थितो वा
पदाद्बली पश्यति यो व्ययं च ।
विशिष्य शुक्रेन्दुभुजङ्गराज-
दृष्टे व्यये निर्धनतैव सत्यम् ॥ २६ ॥

तृतीयषष्ठर्क्षगताश्च नीचाः
क्रूराः पदादर्थकरा भवन्ति ।
उच्चास्तु पश्यन्ति यदि प्रकृत्या
पदं तदा तान् सबलान् वदन्ति ॥ २७ ॥

विलग्नभात् कारकतः पदाच्च
विचार्य खेटान् विविधान् विपश्चित् ।
उदीरयेत् राजसभासु सम्यक्
कदापि नो याति मृषापदं सः ॥ २८ ॥

॥ इति श्रीबालात्रिपुरसुन्दरी कृपाकटाक्षसमधिगतसमस्त-
विद्यावैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्नमालायां
द्वितीयोऽध्यायः ॥

---

1. च. वदन्ति

चरा स्थिरान् पञ्चमलाभभावान्
स्थिरास्त्रिषष्ठं नवमं तथैव ।
चतुर्थजामित्रगृहं च रिःफं
तथोभयस्थाः प्रविलोकयन्ति ॥ १ ॥

[1]ओजे विलग्ने तु तदेव लग्नं
युग्मे तदन्यत् पुरुषस्य योज्यम् ।
तत्रापि तत्सप्तमयोर्बलेन
ग्राह्यं विलग्नं नियतं हि सद्भिः ॥ २ ॥

शनिः कुजो ज्ञो गुरुशुक्रचन्द्र- (शन्यारसौम्येज्यसितैणचिह्न)
दिनेश्वराणां बलमुत्तरं स्यात ।
अन्ये तु सूर्येन्दुभृगोस्तनूज-
गुरुज्ञभौमार्कसुतान् वदन्ति ॥ ३ ॥

ग्रहव्यपेतात् सखगो बलीयान्
तत्राप्यनेकग्रहसंयुतत्वम् ।
साम्ये चरादिक्रमतो बली स्यात्[2]
तत्रापि साम्ये तु निसर्गतः स्यात् ॥ ४ ॥

एवं चतुर्धापि बलं च योज्यं
योगे विलग्नस्य सदैव सद्भिः ।
मृतौ तु सर्वत्र तु दुर्बलं हि
बलाधिकं ग्राह्यतमं वदन्ति ॥ ५ ॥

यथोत्तरं योगविधौ ज्ञकेतु-
भृगोस्तनूजाङ्गिरसां वदन्ति ।
अन्ये विदो देवपुरोहितस्य
ध्वजस्य शुक्रस्य बलं फणन्ति ॥ ६ ॥

---

1. ङ. नास्त्ययं श्लोकः 2. घ. यान्

रव्यारमन्दा भुजगश्च मृत्यौ
[1]बलेन युक्ता हि यथोत्तरं ते ।
क्षीणश्शशी क्रूरयुतो बुधश्चे-
त्येवं जगुः केचन [2]मौनिवर्याः ॥ ७ ॥

शुभैर्युतः पूर्णकलः तथोच्चः
चन्द्रः खगेभ्योऽभ्यधिकं बलीयान् ।
श्रेयोऽशुभस्यापि विधौ बलीयान्
[3]सदापि नीचो विबलोऽपि चन्द्रः ॥ ८ ॥

विचक्षणो लग्नबलं विचार्य
शुभानि पश्चान्नियतं विलोक्य ।
संवादतो द्वित्रिशुभैर्दशासु
ब्रूयान्नृपाणां सततं फलानि[4] ॥ ९ ॥

विलग्नगो लग्नपतिः परत्र
द्वौ खेचरौ तत्र बलं विलग्नम् ।
एकस्तथा स्वोच्चगतः परत्र
द्वौ वा तदानीमपि तद्वदेव ॥ १० ॥

एकत्र तु द्वावधिपौ तु नीचः
तत्सप्तमेऽप्येकखगे तथैव ।
ग्रहैर्वियुक्तोऽप्यधिपे तथोच्चे
तदेव लग्नं प्रवदन्ति [5]सन्तः ॥ ११ ॥

---

1. ग. यथोत्तरं ते हि बलेन युक्ताः
2. ङ. योगि
3. च. पापः
4. ङ. सभासु
5. घ. धीराः

एवं च राशेरथ राशिपाच्च
    बलानि सर्वं च निरीक्ष्य विद्वान् ।
दशाविपाकेष्वपि तद्वदेव
    बलाधिकं लग्नपदेऽभिषिञ्चेत् ॥ १२ ॥

सर्वत्र साम्येऽपि दृगाणतोऽपि
    विचारणीयं हि बलं सुधीभिः ।
तत्रापि साम्ये खलु होरतः (या) स्या-
    दितीव सर्वज्ञमते वदन्ति ॥ १३ ॥

त्रिंशत्कला व्योममणेर्विधोस्तु
    कलास्तथा षोडश भूसुतस्य ।
षड् ज्ञस्य चाष्टौ सुरपूजितस्य
    भृगोर्दश द्वादश चैकिकार्केः ॥ १४ ॥

निदानमेतद्धि बले निसर्गे
    कलाविभागान् मुनयो वदन्ति ।
बली फणीन्द्रो ध्वजतस्तथैकः
    शुभैर्युतत्वे बलवान् ध्वजः स्यात् ॥ १५ ॥

राहुर्बली क्रूरखगेन युक्तो-
    ऽप्येतद्बलं जातकमात्र एव ।
नीचस्तथा स्वोच्चखगेन युक्तः
    स्वयं तथोच्चस्य फलं ददाति ॥ १६ ॥

योगे तदन्यत्र तु नीच एव
    बली युतोच्चं विबलं करोति ।
दशाविभागेऽप्ययमेव योज्यः
    न्यायस्तथा शास्त्रविशेषतश्च ॥ १७ ॥

[1]विचारणीयं बहुशोऽत्र सद्भिः
    ग्रन्थस्य विस्तारभयान्न चोक्तम् ।

---

1. ङ. नास्त्ययं श्लोकः

अतः स्वबुद्ध्यैव विचार्य सर्वं
वदन्तु सर्वं गुणदोषविज्ञाः ॥ १८ ॥

॥ इति श्रीबालात्रिपुरसुन्दरीकृपाकटाक्षसमधिगतसमस्तविद्या वैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्नमालायां तृतीयोऽध्यायः ॥

योगेषु चन्द्रस्थितराशिनाथः
योगप्रदो जातकिनो नरस्य ।
विनैव वक्तुं यतते मनुष्यः
फलानि लोके स भवेन्मृषैव ॥ १ ॥

दिष्ट्या स पश्येदथ पूर्वशास्त्र-
निर्णीतलग्नं यदि यस्य कस्य ।
कुलाधमो वापि स एव लोके
नरेन्द्रपूज्यः स भवेत् चिराय ॥ २ ॥

स एव सूर्यो यदि मर्त्यनाथः
चन्द्रः तु भूपालसखः स एव ।
भृगुस्त्वमात्यः सचिवः तथैव
नेता बलानां क्षितिजो नरः स्यात् ॥ ३ ॥

बुधः कुमारो नृपतेस्तथैव
प्रेष्यो भवेत्सूर्यसुतो मनुष्यः ।
स एव सूर्यादिखगैर्युतश्चेत्
ददाति तत्तद्गुणमेव भूयः ॥ ४ ॥

बहुग्रहैश्चेद्बलवद्ग्रहस्य
गुणानुरूप्यं प्रददाति खेटः ।
दृष्टः फणीन्द्रेण युतोऽपि दुष्टं
[1]नृशंसवृत्तिं पुरुषं करोति ॥ ५ ॥

1. च. प्रशस्तवित्तं

ध्वजेन युक्तो यदि धर्मशीलं
कुरूपिणं चापि करोति मर्त्यम् ।
उच्चे तथा द्रष्टरि भाग्यजीवी
बहुक्षितीन्द्रैः बहुमानमेति ॥ ६ ॥

द्रष्टा तथैको बलवान् यदि स्यात्
तथा स भूपैः बहुमानजीवी[1] ।
क्रूरैर्युते द्रष्टरि दुष्टचित्तः
क्रूरे स्वयं क्रूरतरप्रवृत्तिः ॥ ७ ॥

उष्णस्वभावो दिननाथयुक्तः
स्वेदी सदा चन्द्रमसा युते स्यात् ।
कुजेन खर्ज्जूसहितो व्रणी वा
स्थौल्यं बुधे हस्तिसमानचर्मा ॥ ८ ॥

गुरौ शुभः पिङ्गलमूर्धकेशः
कामी भृगौ वक्रशिरोरुहश्च ।
शनौ कृशाङ्गः कुटिलस्सिरावान्
राहौ जराजर्जरिताङ्गसन्धिः[2] ॥ ९ ॥

ह्रस्वः कुरूपी च तथैव केतौ
वदन्ति सन्तः प्रकृतिं जनानाम् ।
एवं दशायामधिपाच्च योज्यं
[3]वदेन्मृषावान् न भवेत् सभासु ॥ १० ॥

॥ अथ योगफलम् ॥

रवीन्दुयोगे कुटिलो नृशंसः
रव्यारयोगे पितृदारगामी ।
रविज्ञयोगे श्रुतवान् गुणाढ्यः
जीवार्कयोः ब्रह्मविदुत्तमश्च ॥ ११ ॥

---

1. ख. मेति
2. ग. यष्टिः
3. च. भूमौ मृषा नैव भवेन् मनुष्यः।

शुक्रार्कयोगे कुलटासुतः स्यात्
शन्यर्कयोः शूद्रसमो नरः स्यात् ।
फण्यर्कयोः म्लेच्छसमोऽतिदुष्टः
ध्वजार्कयोगे शिवपाददासः ॥ १२ ॥

चन्द्रारयोगे द्विजदारगामी
चन्द्रज्ञयोगे हरिभक्तियुक्तः ।
ब्रह्मज्ञशीलो गुरुचन्द्रयोगे
शुक्रेन्दुयोगे बहु [1]भोगवान् स्यात् ॥ १३ ॥

शनीन्दुयोगेऽप्यतिलोलचित्तः
फणीन्दुयोगे विधवातनूजः
ध्वजेन्दुयोगे सभयोऽतिदीनः
ध्वजी भवेद्धर्मपथे प्रवृत्तः ॥ १४ ॥

आरज्ञयोगे सुतदारलोलः
जीवारयोगे गुरुदारगामी[2] ।
शुक्रारयोगे नृपदारगामी ।
शन्यारयोः प्रेष्यवधूषु लोलः ॥ १५ ॥

राह्वारयोः म्लेच्छवधूविहारी
ध्वजारयोः देववधूषु सक्तः ।
जीवज्ञयोगे श्रुतवान् गुणज्ञः
कुलीनजन्मा बुधशुक्रयोगे ॥ १६ ॥

युतौ बहूनां वलवद्ग्रहस्य
गुणानुरूपेण विचिन्तनीयम् ।
नरः सदा जीवभुजङ्गयोगे
चण्डालकान्तारतिलोलुपः स्यात् ॥ १७ ॥

---

1. च. भाग्य    2. च. ग. गन्ता ।

अर्किञ्जयोगे कुटिलोऽतिमानी
फणिञ्जयोगे परदूषकः स्यात् ।
एवं युतौ योगदखेचरस्य
विचिन्तनीयं विबुधैः सदैव ॥ १८ ॥

द्रेक्काणपालग्नपतेर्विलग्ना-
दप्येवमूह्यं विहितार्थरीत्या ।
वाञ्छन्ति लाभाधिपतेश्च केचित्
भाग्याधिपाच्चैवमुदाहरन्ति ॥ १९ ॥

योगे बली योगद एव खेटः
तथा भुजङ्गो मरणे बलीयान् ।
तदाश्रयाच्चान्यखगा भवेयुः
[1]लाभाधिपाद्वादिगुरोर्मतेन ॥ २० ॥

॥ इति श्रीबालात्रिपुरसुन्दरीकृपाकटाक्षसमधिगतसमस्त-
विद्यावैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्न-
मालायां चतुर्थोऽध्यायः ॥

॥ अथ भावाः ॥

लग्नं पश्येद्योगदो यः खगेन्द्रः
तस्योच्यन्ते ह्यर्गला योगसिद्धयै ।
यं न ज्ञात्वा मानवा हासभूम्यै
संभूयन्ते भूभृतां सन्निधाने ॥ १ ॥
ओजस्थानां तत्क्रमेणैव गण्यं
युग्मस्थानां व्युत्क्रमेण प्रकल्प्यम् ।
राहोर्योगे योगदे व्युत्क्रमेणे-
त्येवं केचित् सज्जगुर्मानवेन्द्राः[2] ॥ २ ॥

---

1. च. बलाधिकाच्चापि, ङ. भागादिकाच्चादि 2. ङ. मौनिवर्याः

वेश्मस्थाने [1]खेचराणां स्थितानां
कर्मस्थाने संस्थिता हानिदाः स्युः ।
वित्तस्यान्त्यं लाभगस्य तृतीयं
हानिस्थानं सर्वदा योगदस्य ॥ ३ ॥

दुष्टस्थाने संस्थितोऽप्यल्पखेटः
[2]कुर्यात्सत्यं संस्थितानां च हानिम् ।
[3]खेटाः कुर्युः योगदस्य त्रिकोणे
योगारम्भं यत्र कुत्रापि लोके ॥ ४ ॥

राहुः केतुः योगदस्य त्रिकोणे
कुर्यात् भङ्गं योगसिद्धेरवश्यम् ।
सौम्यैर्दृष्टः सौम्ययुक्तोऽथवालं
नृणां लोके योगसिद्ध्यै[4] त्रिकोणे ॥ ५ ॥

लग्नाधीशो योगदः स्वर्क्षनाथः
पापोऽपि स्यात् योगसिद्ध्यै त्रिकोणे ।
नीचः खेटो नैच्यमेव प्रयच्छे-
दुच्चोऽप्येवं भूयसे मङ्गलाय ॥ ६ ॥

त्रिकोणसंस्थाश्च तथाष्टमस्थाः
पापा मुहुः भङ्गमुपाहरन्ति ।
क्षीणेन्दुदृष्टे व्ययभेऽपि तद्व-
द्वदन्ति सन्तो मुहुरेव भङ्गम् ॥ ७ ॥

दुष्टार्गलस्थाः सकलाश्च खेटाः
व्ययस्थिता वा[5] यदि योगदस्य ।

---

1. ग. संस्थितानां ग्रहाणां
2. च. हानिं कुर्यात् योगदस्य त्रिकोणे
3. च. सौम्यस्थाने संस्थिता भूयखेटाः
4. ङ. दस्य
5. ङ. श्चापि हि

राह्वारयुक्तोऽप्यथ योगदो वा
(कुर्वन्ति) भवेद्धि सर्वज्ञमतेन भङ्गम् ॥ ८ ॥

फणी व्यये योगशतापहर्ता
शुक्रेण युक्तस्त्वयुतप्रहर्ता ।
शुक्रेन्दुसर्पा व्ययभे विशिष्य
कुर्वन्ति नित्यं खलु योगनाशं ॥ ९ ॥

पूर्णार्गलानां चरभे युतौ स्यात्
योगः त्रिपादार्गलतः स्थिरर्क्षे ।
द्वन्द्वे तथार्धार्गलतोऽथवा स्यात्
पादार्गलाद्वा मनुजस्य योगः ॥ १० ॥

पूर्णार्गलः स्यात्त्रितयस्य योगे
पादोनमाहुः द्वितयस्य तद्वत् ।
एकत्र चार्धार्गलसंज्ञितः स्यात्
कोणे शुभैः पादमिति ब्रुवन्ति ॥ ११ ॥

पादार्गलानामथ संप्रवच्मि
विशेषमार्यैः मुनिभिः प्रणीतम् ।
कर्मस्थिताः शोभनखेचरेन्द्राः
चतुर्थभे चापि ग्रहै(खगै)र्वियुक्ते ॥ १२ ॥

शुभेषु कोणान्तरसंस्थितेषु
पादार्गलं तं प्रवदन्ति धीराः ।
शुभेषु जामित्रगृहस्थितेषु
त्रिकोणसंस्थेषु शुभग्रहेषु ॥ १३ ॥

योगप्रदे स्वोच्चगतेऽथवा स्यात्
पादार्गलं तत् प्रवदन्ति सन्तः ।
[1]चन्द्रस्तथा योगदसंयुतश्चेत्
व्यये शुभानां यदि सन्निवासः ॥ १४ ॥

---

1. ग. चन्द्रोऽथवा

[1]व्ययत्रिकोणे न शुभा यदि स्युः
योगो हि पादार्गलसंज्ञितः स्यात् ।
[2]मूलत्रिकोणे हि शुभा यदि स्युः
योगो हि पादार्गलसंज्ञितः स्यात् ।
पादार्गलानां द्वितयस्य योगे
बुधास्तदर्धार्गलमामनन्ति ॥ १५ ॥

योगप्रदस्य व्ययभे शुभानां
योगे तदर्धार्गलमामनन्ति ।
खेटैरनेकैर्यदि योगदः स्यात्
उक्तस्तु पादार्गलसंज्ञितः स्यात ॥ १६ ॥

उच्चोऽथवाप्युच्चयुतोऽपि तद्व-
दितीव सर्वज्ञगुरोर्मतेन[3] ।
उच्चेन दृष्टेऽपि बलं हि केचित्
वदन्ति राशेरधिनायकैश्च ॥ ॥ १७ ॥

क्रूराश्चतुर्थर्क्षगताः शुभा वा
तृतीयषष्ठाष्टमगा[4] यदि स्युः ।
ग्रहैर्विहीनेऽप्यथकर्मभे वा
योगोऽयमर्धार्गलसंज्ञितः[5] स्यात् ॥ १८ ॥

शुभार्गलैः क्रूरखगास्तथैव
दुष्टार्गले सौम्यखगा यदि स्युः ।
तदीश्वरे वा बहुभिर्युते स्यात्
योगोऽयमर्धार्गलनामधेयः ॥ १९ ॥

---

1. च. इदमर्धमत्र नोपलभ्यते
2. क. इदमर्धमत्र नोपलभ्यते
3. ङ. सर्वज्ञमते वदन्ति ।
4. क. षष्ठर्क्षगता यदि
5. ङ. मामनन्ति

एवंविधैरर्गलयोगभेदैः
युक्तः खगो योगदनामधेयः ।
लग्नं प्रपश्येद्यदि मानवस्य
धरापतेस्तुल्यबलत्वमेति ॥ २० ॥

॥ इति श्रीबालात्रिपुरसुन्दरीकृपाकटाक्षसमधिगतसमस्तविद्या-
वैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्नमालायां
पञ्चमोऽध्यायः ॥

चरस्थिताः पादबलाः खगेन्द्राः
स्थिरे तथार्धं बलमामनन्ति ।
तथोभये पूर्णबलं खगानाम्
उच्चोऽपि पादोनबलः खगः स्यात् ॥ १ ॥

पापास्तथोच्चे विबलाश्शुभास्तु
नीचस्थिताः स्युः विबलाः प्रकामम् ।
फणीश्वरः पूर्णफलाय दुष्ट-
ग्रहैर्युतस्तत्तदुदाहरन्ति ॥ २ ॥

योगप्रदाल्लग्नपतेर्विलग्नात्
भावा विचार्या मनुजर्षभेण ।
उक्तेषु यः पूर्णबलस्तदानीं
तत्रापि साम्ये रजनीश्वराच्च ॥ ३ ॥

राहुर्विलग्नेऽप्यथवा तदीश-
युक्तोऽथवा योगदसंयुतः स्यात् ।
तथा सुधीभिः फलकांक्षिभिः स्युः
विपर्ययात् भावफलं विचार्यम् ॥ ४ ॥

[1]कृष्णीयशास्त्रे हि पुरैव भावाः
मयैव सूक्ता विदुषां हिताय ।

1. क. अयं श्लोको नोपलभ्यते

अत्रापि ते स्युः सुदृशां प्रबोध-
हेतोः फलानां मनुजर्षभाणाम् ॥ ५ ॥

वर्णाकृतिर्योगदतो नराणां
न चेद्विलग्ने बलवान् खगामी ।
[1]कृष्णीयरीत्यैव विचक्षणेन
वर्णादयः स्युः परिकल्पनीयाः ॥ ६ ॥

जामित्रनाथांशकतो हि जातिः
ख्यातिस्तथा लग्नविभागतः स्यात् ।
योगप्रदाद्वा बलिनो युताद्वा
विचार्य [2]धीमान् प्रवदेत् सभासु ॥ ७ ॥

लग्नं गतैः क्रूरखगैः नरः स्यात्
क्रूरः शुभैश्चापि शुभप्रशस्तिः ।
मिश्रैस्तथा मिश्रगुणोऽतिनीचैः
नैच्यं तथोच्चे बहुमानजीवी ॥ ८ ॥

राहौ विलग्ने पिशुनो नृशंसः
केतौ सदा धर्मगुणाभिमानी ।
शनौ सदाचारविवर्जितः स्यात्
कामी भृगौ देवपुरोहिते तु ॥ ९ ॥

ज्ञानी च वेदान्तविचारदक्षः
बुधे तु वक्ता मतिमान् गुणाढ्यः ।
कुजे परस्त्रीनिरतो विधौ तु
[3]बाल्ये कृपालुर्मधुराकृतिश्च ॥ १० ॥

दिनाधिपे कोपगरिष्ठबुद्धिः
वेदाङ्गविच्चापि सदा नरः स्यात् ।

---

1. ङ. इदमर्धं नोपलभ्यते  3. घ. भवेत्
2. ङ. विद्वान्

वित्तस्थितैः क्रूरखगैर्व्ययस्थैः
प्रक्षीणवित्तो मनुजस्तथैव ॥ ११ ॥

ग्रहव्यपेते व्ययभे धनस्थैः
क्रूरैः शुभैर्वा मनुजो धनाढ्यः ।
क्रूरैः सदा[1] क्रूरवचाः शुभैस्तु
शुभंयुवाचोविभवो नरः स्यात् ॥ १२ ॥

रवौ तु वैयाकरणो विधौ तु
साहित्यविद्याकुशलः कुजे तु ।
नैयायिकः स्याच्छशिनन्दने तु
मीमांसको देवपुरोहिते तु ॥ १३ ॥

वेदान्तवित् स्यात् भृगुनन्दने तु
कामी च साहित्यकलाप्रवीणः ।
मन्दे तु मन्दप्रकृतिः फणीन्द्रे
बलाधिके वक्रतमो बली स्यात् ॥ १४ ॥

मूको ध्वजे त्वस्फुटवाक् सदैव
योगप्रदाल्लग्नपतेः समूह्यम् ।
विद्याविशेषास्तु चतुर्थभावात्
तत्पञ्चमाच्चापि विचिन्त्यमाहुः ॥ १५ ॥

उच्चैर्युताभ्यां गुरुचन्द्रमाभ्यां
प्रबन्धकर्ता भृगुचन्द्रमाभ्याम् ।
काव्यादिकर्ता बुधचन्द्रमाभ्यां
न्यूनं ततः किञ्चिदुदाहरन्ति ॥ १६ ॥

बुधारयोरान्ध्रकविर्गुरौ च
शुक्रे तु गीर्वाणकविः शनौ तु ।

1. ग. क्रूरैस्तथाः

स्थिते सचन्द्रे द्रमिडः फणीन्द्रे
म्लेच्छादिभाषासु[1] सिते कविः स्यात् ॥ १७ ॥

तृतीयगैः क्रूरखगैः प्रतापी
लाभे शुभा नो यदि संस्थिताः स्युः ।
तृतीयनाथेन युते तु योग-
प्रदे प्रतापं समुदाहरन्ति ॥ १८ ॥

सम्बन्धतो योगददारपत्योः
स्नेहोऽन्यथा स्यात् विपरीतमेव ।
लग्नाधिपाल्लग्नगृहाच्च केचित्
सम्बन्धमैच्छन् कुशलं मुनीन्द्राः ॥ १९ ॥

वेश्मर्क्षगाः शोभनखेचरेन्द्राः
शुभं प्रदद्युः यदि कर्मगेहे ।
न स्युः ग्रहाश्चैवमिदं दशासु
विचिन्तनीयं विबुधा वदन्ति ॥ २० ॥

धनागमो वित्तचतुर्थलाभैः
विपर्ययः कर्मतृतीयरिःफैः[2] ।
पूर्वोक्तगेहेषु ग्रहा(खगा)त्यये स्युः
कर्मादयो व्यर्थफलप्रदाने ॥ २१ ॥

रवौ तु तार्णं गृहमाहुरार्याः
चन्द्रे तु पर्णैः गृहमामनन्ति ।
कुजे तु लोष्टादिगृहं प्रशस्तं
बुधे तु [3]भूम्यभ्रगृहं वदन्ति ॥ २२ ॥

तस्मिन् गुरौ दारुगृहं [5]भृगौ तु
विचित्रमाहुः भवनं मुनीन्द्राः ।

---

1. ग. ङ. निपुणः
2. च. नाशैः ग. नीचैः
3. च. सुधाशुभ्र
4. ग. प्रशस्तम्
5. ग. भृगौ विचित्रं भवनं वदन्ति ।

सूर्यात्मजे क्षीणशिलागृहं स्यात्
राहौ दृढं चेष्टकमामनन्ति ॥ २३ ॥
केतौ तु देवालयमण्डपादिं
वदन्ति च ज्योतिषका मुनीन्द्राः ।
प्रासादमाहुः भृगुजे सचन्द्रे
जीवेन दृष्टे स्वभुजार्जितं स्यात् ॥ २४ ॥
फणीश्वरे चान्यकृतं तदेव
रवीक्षिते राजगृहं वदन्ति ।
शनौ परप्रेष्यतया निवासोऽ-
प्येवं हि सर्वत्र विचारणीयम् ॥ २५ ॥
सुतर्क्षनाथाद्यदि योगदस्य
सम्बन्धसिद्धिः बहुपुत्रलाभः ।
तत्रापि राहौ च रवौ गुरौ च
वदन्ति सन्तः खलु निश्चयेन ॥ २६ ॥
चन्द्रे बलाढ्ये सुतभावसंस्थे
पुत्रं किलैकं समुदाहरन्ति ।
बुधर्क्षगे वा बुधसंयुते वा
दत्तः सुतः स्यात् बहुलेन्दुदृष्टे ॥ २७ ॥
शनौ तथैके मृतपुत्रवान् स्यात्
केतौ नरः स्त्रीजनकत्वमेति ।
संख्या तु संयुक्तखगैः कलाभि-
रुच्चादिभिस्तद्द्विगुणाभिवृद्धिः ॥ २८ ॥
रवौ सुतस्थे शिवभक्तियुक्तः
चन्द्रे तु देव्यां क्षितिजे कुमारे ।
विष्णौ बुधे साम्बशिवे गुरौ स्यात्
ब्रह्मात्मवादी च भृगौ तु लक्ष्म्याम् ॥ २९ ॥

नगात्मजायामथवापि भक्तिः
शनौ यमे भक्तिमुदाहरन्ति ।
दुर्गादिपूजानिरतः फणीन्द्रे
केतौ तु चण्डेश्वरपूजकः स्यात् ॥ ३० ॥

भुजङ्गराजः शुभदृष्टियुक्तः
शिवे स पापैर्यदि संयुतः स्यात् ।
विशेषपाषण्डमतिः नृशंसः
कामी भगार्चानिरतोऽथवा स्यात् ॥ ३१ ॥

राहुः शुभेनाप्यशुभेन युक्तः
दुर्गात्मकं तं नियतं वदन्ति ।
शनिर्बुधक्षेत्रगतस्तु विष्णौ
स्वर्क्षे तथा मध्वमते प्रविष्टः ॥ ३२ ॥

जीवेन दृष्टोऽप्यथवा युतो वा
रामानुजः स्यादिति सम्प्रदायः ।
शुक्रेण दृष्टोऽप्यथवा युतो वा
श्रीवेङ्कटेशे नियतो नरः स्यात् ॥ ३३ ॥

[1]बुधादिखेशात्मजगेहवासो
गोविन्दपाषण्डमतिं ददाति ।
स्वर्क्षोच्चनीचस्थितरात्रिनाथः
शिवात्मको व्योममणिस्तु नित्यम् ॥ ३४ ॥

शारीरवृत्तिर्जपशीलकर्मा
ध्यानात्मको वा हिमगुस्तथैव ।
यष्टा [2]कुजे ज्ञेऽपि च डम्भकर्मा
आचारवादीति विदुर्मुनीन्द्राः ॥ ३५ ॥

कर्मध्यानयुतः सौरिः शुक्रो राजसकर्मवान् ।
अकर्मा वा कुकर्मा वा शनिर्ध्यानात्मकः खगः ॥ ३६ ॥

---

1. च. अयं श्लोको नोपलभ्यते 2. क. ग. ङ. क्रतूनामपि

यष्टा वा सर्वयज्ञानामशक्तो वा भवेन्नरः ।
कौलो वा पतितो वापि राहुः पाषण्डकोऽपि वा ॥ ३७ ॥

[1]राहुः शुक्रयुतो दृष्ट आचार्यध्यानवान् सदा ।
शशिजात्पार्ष्णिराशिस्थादप्येवं वदतां नयेत्[2] ॥ ३८ ॥

अमात्यदासादप्येवं वदन्ति मुनयोऽखिलाः ।
शशिराशिर्ग्रहयुतः सदा तत्पार्ष्णिगैः खगैः ॥ ३९ ॥

विलग्नलग्ननाथाभ्यां योगदाद्वापि पञ्चमात् ।
उपासनाविधिश्चिन्त्यः सर्वदापि क्षितौ नृणाम् ॥ ४० ॥

तदंशः शुभयुग्दृष्टः इह जन्मनि सिद्धिदः ।
कदापि सिद्धिर्नैवास्ति[3] पापदृष्टियुतः स चेत् ॥ ४१ ॥

गुरुशुक्रनिशानाथकेतुसौम्याः शुभग्रहाः ।
[4]एभिर्दृष्टो युतांशश्चेत् इह शीघ्रेण सिद्धिदः ॥ ४२ ॥

शनिभौमभुजङ्गाः स्युः कौलधर्मानुसारिणः[5] ।
धरणीसुतमन्दाभ्यां भौमाहिभ्यां युता यदि ॥ ४३ ॥

शशिना कविना युक्तं दृष्टं वा कौलभाङ् नरः ।
गुरुणा युक्तमथवा दृष्टं वा न भवेद्यदि ॥ ४४ ॥

उक्तराशौ शुभे राहौ शनियोगे तु वैदिकः ।
केत्वादित्यजयोर्योगे शैवो वा वैदिकोऽथवा ॥ ४५ ॥

गुर्वादित्यजयोर्योगे भवेत् वैदिकवैष्णवः ।
राहुभूमिजयोर्योगे योगे वा शनिभौमयोः ॥ ४६ ॥

पाषण्डी केतुकुजयोः योगे स्यान्मान्त्रिकः पुमान् ।
आभिचारककर्ता वा पापिष्ठो वा भवेन्नरः ॥ ४७ ॥

---

1. च. स राहुः शुभयुक् । ग. सराहुश्शुक्रयुक्
2. घ. नरः
3. ग. न स्यात्सिद्धि
4. ङ. इदमर्धं न दृश्यते
5. ङ. क्रूरा इति गुरोः मतम् ।

योगे तु [1]शनिकेत्वोस्तु जातः शैवो भवेन्नरः ।
उपासको हरेस्सूनोः हरस्याप्यथवा भवेत् ॥ ४८ ॥

उक्तराशिर्गुरुयुतो गुरुराशिस्तु वा पुनः ।
केवलेनाथ शशिना दृष्टो वा संयुतोऽपि वा ॥ ४९ ॥

अन्यो यद्युक्तराशिस्तु गुरुराशिगतोऽथवा ।
शशिनाथ युतो दृष्टो वैष्णवो भवति ध्रुवम् ॥ ५० ॥

शशिभास्करयोर्योगे शिवदीक्षापरो नरः ।
योगे तु केतुशशिनोः शूलिन्याः स्यादुपासकः ॥ ५१ ॥

वैदिको वाथ शैवो वा योगे तु शशिसौम्ययोः ।
योगे वा शशिगुर्वोस्तु ब्रह्मज्ञानी भवेन्नरः ॥ ५२ ॥

योगे तु शुक्रशशिनोरैहिकार्थ उपासकः ।
देव्यास्तत्र तु योगे स्यात् संन्यासी गुरुभौमयोः ॥ ५३ ॥

केतुश्चेत्तत्र भण्डारी नरो वाप्यवधूतकः ।
लाटः स्यात्तत्र पापर्क्षे योगे वा राहुमन्दयोः ॥ ५४ ॥

तत्र तौ गुरुदृष्टौ चेत् विरक्तो वा यतिस्तु वा ।
गुरुराह्वोः समायोगे चण्डालैः सह पूजकः ॥ ५५ ॥

एवं सुतर्क्षादुक्तोच्चग्रहैः विद्वान् बलाबलम् ।
विनिश्चित्य फलं ब्रूयात् कदापि न मृषा भवेत् ॥ ५६ ॥

**॥ इति श्रीबालात्रिपुरसुन्दरी कृपाकटाक्षसमधिगतसमस्त-विद्यावैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्नमालायां षष्ठोऽध्यायः ॥**

षष्ठाधिपाद्योगदखेचरस्य
संबन्धतः सैनिकनायकः स्यात् ।
योगप्रदे षष्ठपतौ तथा स्या-
देवं दशायामपि [2]वीक्ष्यमाहुः ॥ १ ॥

---

1. ग. गुरुराह्वोस्तु 2. ग. योज्य

तत्र स्थिताः पापखगाः पुमांसः
कृष्यादिसञ्जीवनमाचरन्ति ।
[1]शन्यारसर्पा विषमप्रदेशे
गिरौ तथा काननसीम्नि च स्यात् ॥ २ ॥

चन्द्रेण दृष्टे सलिलप्रदेशे
शुक्रेण चैवं मुनयो वदन्ति ।
गुरौ जलप्रायतटे सचन्द्रे
राहौ शिलाप्रायतटे वदन्ति ॥ ३ ॥

योगप्रदात् केन्द्रगतो यदि स्यात्
षष्ठाधिनेता प्रबलः कृषौ स्यात् ।
त्रिकोणसंस्थोऽपि बली धनाढ्यः
केमद्रुमं नाशगतं वदन्ति ॥ ४ ॥

योगप्रदः सप्तमपो यदि स्यात्
सम्बन्धयोगाद्बहुदारपः[2] स्यात् ।
अंशादिसम्बन्धवशाद्विशिष्य
संख्याविभागं प्रवदन्ति तज्ज्ञाः ॥ ५ ॥

तत्रैव चन्द्रे वनिता सुशीला
सुरूपिणी शुक्रयुतेऽपि तद्वत् ।
गुरौ सचन्द्रे च सुलक्षणाढ्या
कलावती स्याद्वणिजेति केचित् ॥ ६ ॥

वयोधिका स्याच्छनिना कुरूपा[3]
तपस्विनी वाप्यथ रोगिणी वा ।
पत्या विहीना भुजगे तु केतौ
कुरूपिणी चापि तथा वदन्ति ॥ ७ ॥

---

1. च. शन्यारदृष्टे
2. च. ङ. दारवान्
3. ग. वधूटी

यद्यष्टमस्थौ फणिभूमिपुत्रौ
वदन्ति मृत्युं किल शस्त्रघातैः ।
तत्रैव मन्दे सविधौ तु वात-
रोगेण मृत्युं लभते ध्रुवं हि ॥ ८ ॥

रवौ नृपात्सर्पयुते विनाशं
चन्द्रेण मृत्युं भुवि राजरोगात्[1] ।
कुजे व्रणाच्चन्द्रसुते च केतौ
विषूचिकाद्यैर्निधनं वदन्ति ॥ ९ ॥

क्षीणेन्दुदृष्टे निधने कुजे स्यात्
सर्पेक्षिते तु कृमिसम्भवोऽपि ।
क्रूरेण युक्तेन बुधेन सन्तः
दुर्गन्धवृद्धिं समुदाहरन्ति ॥ १० ॥

शुभावलोकेन न दोष एषः
विपर्यये त्वेवमुदाहृतं स्यात् ।
पितुः पतेः योगदखेचराच्च
सम्बन्धतः स्यात् पितृवित्तलाभः ॥ ११ ॥

तत्र स्थितैस्स्यात् शुभखेचरेन्द्रैः
धर्माभिवृद्धिं गुरुदेवभक्तिम् ।
[2]अन्यच्च सर्वं मतिमान् विचार्य
फलं सभायां प्रवदेदतन्द्री ॥ १२ ॥

कर्मादयः पूर्वमुदीरता ये
तथैव दुष्टार्गलमन्तरेण ।
फलप्रदाः तत्पतिभिः सहैव
सम्बन्धतो योगदखेचरस्य ॥ १३ ॥

---

1. घ. ङ. यक्ष्मात्  2. ग. इदमर्धमत्रैव दृश्यते

संक्षेपतो ग्रन्थतया मयोक्तं
विस्तारतः तन्मतिमान् विचार्य ।
[1]गुरूपदेशान्नृपतेः सभासु
वक्तव्यमत्यद्भुतशास्त्रमेतत् ॥ १४ ॥

एवं विलग्नादपि योगदाच्च
[2]विलग्ननाथाच्च विचिन्तनीयम् ।
[3]पदाच्च वाञ्छन्ति परे मुनीन्द्राः
बली तु सर्वत्र फलप्रदः स्यात् ॥ १५ ॥

॥ इति श्रीबालात्रिपुरसुन्दरीकृपाकटाक्षसमधिगतसमस्तविद्या-
वैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्नमालायां
सप्तमोऽध्यायः ॥

राशेः द्रगाणादथवांशकाच्च
द्रष्टा विलग्नं यदि योगदः स्यात् ।
राशेरथांशाच्च स एव राशेः[4]
द्रेक्काणतोऽप्येवमुदाहरन्ति ॥ १ ॥

द्रष्टा खगो राशिवशाद्विलग्नं
पश्येत् खगः केवलनामधेयः ।
योगप्रदः केवलसंज्ञितो वा
लग्नं प्रपश्येद्यदि योगवान्[5] स्यात् ॥ २ ॥

विहाय दृष्टिं भुवि योगदस्य
न योगशङ्कापि धरातलेऽस्मिन् ।
तत्तत्समादाय नरेन्द्रयोगं
संक्षेपतो वच्मि मुनिप्रणीतम् ॥ ३ ॥

---

1. ङ. इदमर्धं न दृश्यते
2. ङ. नाथाच्च वाञ्छन्ति पदाच्च केचित्
3. ङ. इदमर्धं न दृश्यते
4. च. शतस भवेच्च राशेः
5. च. योगदः

लग्नं द्रगाणं यदि योगखेटं
एको रविः पश्यति चेत्तदानीम् ।
राजा शशी चेन् नृपतिः कलावान्
कुजे त्वरण्याश्रयभूपतिः स्यात् ॥ ४ ॥

बुधे तु वाणिज्यपरो नृपालः
गुरौ तु विप्रामरभक्तियुक्तः ।
शुक्रे तु कामी रसखण्डभूमी-
पतिः शनौ क्षुद्रमहीपतिः स्यात् ॥ ५ ॥

राहौ गिरीन्द्राश्रयभूमिनेता
केतौ तु शून्यक्षितिनायकः स्यात् ।
एतत्फलं विप्रमुखादिवर्ण-
चतुष्टयानां मुनिभिः प्रणीतम् ॥ ६ ॥

म्लेच्छोद्भवानां तु विशेषतोऽद्य
वक्ष्ये विपश्चित्सुखकारणाय ।
फणीश्वरो भूमिजमन्दगेहे
स्थितो बली पश्यति योगदाता ॥ ७ ॥

लग्नं द्रगाणं त्वथवा त्रिकोणं
सर्वंसहामण्डलचक्रवर्ती ।
स एव चन्द्रेण युतेक्षितोऽपि (युतोऽथ दृष्टो)
द्वीपान्तरे स्यान् नृपतिः धनाढ्यः ॥ ८ ॥

भौमादिभिः क्रूरखगैर्युतोऽपि
[1]दृष्टः क्वचित् भूतलनायकः स्यात् ।
शुभेन युक्तोऽपि शुभर्क्षगो वा
शुभेक्षितो वापि बली फणीन्द्रः ॥ ९ ॥

एको बली क्रूरखगेन युक्तः
मध्योऽन्यथा स्याद्विपरीतमेव ।

---

1. ग. क. नूनं

दृष्टिः शुभानां भुजगेश्वरस्य
विप्रादिकानां फलसिद्धये स्यात् ॥ १० ॥
द्वित्र्यादिखेटेक्षणतो धरायाः
क्वचित् पतिः स्यादपि योगदातुः ।
शन्यारसर्पा विषमार्गलानां
योगेऽपि खण्डप्रभुताप्रदाः स्युः ॥ ११ ॥
अन्ये तु दारिद्र्यसमुद्रमग्नान्
कुर्वन्ति दत्वापि धनं तदन्ते ।
लग्नाद्विलग्नाधिपतिर्गरीयान्
ततो द्रगाणो धनदोऽपि कर्ता ॥ १२ ॥
ग्रहैरनेकैः यदि योगदाता
युतस्तदानीं प्रभुयोग एव ।
यद्यर्गले स्युः शुभखेचरेन्द्राः
तथा नरेन्द्रस्य समो विभुः स्यात् ॥ १३ ॥
मिश्रे च मिश्रं विपरीततः स्यात्
विपर्यये नीचखगैर्विनाशः ।
उच्चैस्तथात्युन्नतराजयोगः
क्रूरैर्युतः स्यात् मृदुता विभुत्वे ॥ १४ ॥
चाञ्चल्ययोगः चरसंस्थिते स्यात्
स्थिरत्वमाहुः स्थिरभे ग्रहेषु ।
तथोभयस्थेषु बलाधिकत्वं
विचक्षणो वीक्ष्य वदेत् सभासु ॥ १५ ॥
तथाष्टमस्थेषु भवेद्विभङ्गः
क्रूरेषु केन्द्रेषु भवेद् दृढत्वम् ।
त्रिकोणसंस्थेषु च योगहानिं
व्ययस्थितेषु व्ययमाहुरार्याः ॥ १६ ॥

क्रूरा युता योगकरेण कुर्युः
 क्रूरं दुराचारमुपात्तगन्धम् ।
लग्नाधिपे योगकरे प्रसिद्धः
 धनाधिपे स्याद्धनिकोऽपि वक्ता ॥ १७ ॥

तृतीयपे भ्रातृधनोपभोक्ता
 चतुर्थपे भूषणवान् सुखाढ्यः ।
योगोन्नतः पञ्चमपे मनीषी
 [1]पुत्रादितो द्रव्यसुखप्रशस्तिः ॥ १८ ॥

षष्ठाधिपे शत्रुधनोपजीवी
 दाराधिपे स्त्रीधनसौख्यजीवी ।
रोगेश्वरे निर्धनवान् दरिद्रः
 भाग्येश्वरे भाग्यविवृद्धपुण्यः ॥ १९ ॥

कर्मेश्वरे कर्मरतो धनाढ्यः
 लाभेश्वरे पूर्णधनः समृद्धः ।
व्ययेश्वरे निर्धनिको दरिद्रः
 इतीव सर्वज्ञगुरोर्मतेन ॥ २० ॥

एवं गुणैर्योगखगं निरीक्ष्य
 बलानुसारेण वदेत् फलानि ।
लग्नं न पश्येद्यदि योगखेटः
 लग्नत्रिकोणेषु विचिन्तनीयम् ॥ २१ ॥

लग्नत्रिकोणो यदि पापयुक्तः
 पश्येच्च तं योगखगस्तदानीम् ।
योगस्य भङ्गं प्रवदन्ति धीराः
 शुभेन युक्तस्तु शुभं ददाति ॥ २२ ॥

दशाविभागेन विचारणीयः
 कालोऽपि दैवज्ञवरैः विशिष्य ।

---

1. च. ग. क. प्राज्ञः सुत ।

दशाविभागेषु च राजयोगं
परत्र वक्ष्ये फलकारणाय ॥ २३ ॥
होरां घटिं वा यदि वा विलग्नं
पश्यन् हि योगाय भवेत् खचारी ।
उच्चोऽपि वा नीचविलोकनेन
योगस्य हानिं प्रवदन्ति सन्तः ॥ २४ ॥

॥ इति श्रीबालात्रिपुरसुन्दरीकृपाकटाक्षसमधिगत समस्त-
विद्यावैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्न-
मालायां अष्टमोऽध्यायः ॥

उच्चे शुभे वा धनभावसंस्थे
तृतीयभे नीचखगे शुभे वा ।
चतुर्थराशौ शुभखेचरे वा
स्वोच्चग्रहे पञ्चमभे शुभोच्चे ॥ १ ॥
क्रूरेऽथवा नीचखगे च षष्ठे
शुभे तथा सप्तमभावसंस्थे ।
तथाष्टमस्थेष्वशुभेषु तस्मात्
परत्र सौम्ये नृपतेः समः स्यात् ॥ २ ॥
शुभो द्वितीयेऽथ ततोऽनु नीचः
क्रूरोऽथवा सौम्यखगः चतुर्थे ।
ततोऽनु नीचस्तदतः शुभश्च
ततोऽशुभः तत्परतः शुभोच्चः ॥ ३ ॥
ततोऽनु पापः खगमो रसायाः
पतिर्भवेत् योगकराद्विलग्नात् ।
खेटाभावे चन्द्रतो ग्राह्यमेतत्
सर्वं ग्राह्यं स्याद्दशास्वेवमेव ॥ ४ ॥
लग्नांशे स्यात् पापयुक्ते तदीशे
नीचे क्रूरे क्रूरयुक्ते विलग्ने ।

तूष्णींभूतो योगदाता न पश्येत्
रोगी जातो भाग्यहीनो विशिष्य ॥ ५ ॥

लग्नेशाद्वा योगदाद्वा द्वितीये
क्रूरे तादृक्चाष्टमे राहुवर्जम् ।
सौम्येष्वेवं नाशगेहे प्रजातः
वित्तैर्हीनो भिक्षुकः स्यान् मनुष्यः ॥ ६ ॥

चन्द्रे नीचे नीचखेटे च भावे
तूष्णींभूते योगदे चारिगेहे ।
दुष्टस्थाने भोगिनाथेन दृष्टे
रोगी जातो भाग्यहीनो नरः स्यात् ॥ ७ ॥

आरूढाद्वा योगदाद्वा व्ययस्थैः
खेटैरन्यैः भोगिशुक्रेन्दुयुक्ते ।
लाभस्थानाद् दुष्टभावे ग्रहाणां
राज्ञो मूलाद् द्रव्यनाशं वदन्ति ॥ ८ ॥

आरूढे वा क्रूरखेटे व्ययस्थे
राहौ चन्द्रे लाभसंस्थे सशुक्रे ।
योगाधीशेऽप्यर्गलैः संयुते वा
मध्ये मध्ये योगभङ्गं वदन्ति ॥ ९ ॥

वित्तस्थाने क्रूरखेटाद्यभावे
नाशस्थाने सौम्यखेटैः युते स्यात् ।
त्यागी भोगी दानशीलः प्रजावान्
लग्नादेवं योगदाच्चिन्तनीयम् ॥ १० ॥

योगाधीशात्कोणयोः दुष्टखेटे
नाशस्थाने वा व्यये चैवमेव ।
भावस्थाने क्रूरखेटास्तदानीं
बन्धैर्मृत्युं ज्योतिषज्ञा वदन्ति ॥ ११ ॥

कर्मस्थाने वेश्मगेहे च दुष्टाः
लाभस्थाने चेत् तृतीयेऽथवा चेत् ।
नीचे सौम्ये क्षीणचन्द्रे नराणां
बन्धः प्रोक्तो दीर्घकालं मुनीन्द्रैः ॥ १२ ॥

उच्चैर्दृष्टे स्यान्निरोधस्य नाशः
नीचैर्दृष्टे श्रृङ्खलादिप्रहारः ।
सौम्यैर्दृष्टे स्यान्निरोधेऽपि सौख्यं
द्रष्टव्यं स्यादेवमेवं दशासु ॥ १३ ॥

नीचैः पापैर्वर्षसंख्या शुभैस्तु
मासाः प्रोक्ताः पापखेटैस्तथोच्चैः ।
सौम्यैश्शुद्धैर्वासराः स्वोच्चसंस्थैः
नाड्यो वा स्युर्वाग्व्यथा वा निरोधे ॥ १४ ॥

क्षीणे चन्द्रे बन्धनं पाशमुख्यैः
पूर्णे चन्द्रे बन्धनं [1]वस्त्रतः स्यात् ।
राहौ तु स्याच्छृङ्खलाभिः सशुक्रे
भौमे तु स्याच्चर्मपाशेन बन्धः ॥ १५ ॥

सूर्ये वार्तामात्रमाहुः मुनीन्द्राः
क्रूरैर्युक्ते दर्शनं वा कदाचित् ।
चन्द्रापत्ये हस्तमुष्टिप्रहारः
क्रूरैर्युक्ते दारुभिः पादघातः ॥ १६ ॥

शुक्रे नीचे क्रूरखेटेन दृष्टे
श्मश्रुच्छेदं राजकोपाद् वदन्ति ।
जीवे तु स्याद्भीषणो वाक्प्रपञ्चः
चैवं योज्यं स्याद्दशायां सुधीभिः ॥ १७ ॥

भावे चन्द्रे नीचखेटेन दृष्टे
क्रूरैर्भौमाद्यैः भुजङ्गेन युक्ते ।

---

1. च. तस्य नास्ति

शुक्रे नीचे दुर्बले चाद्वितीये
राजक्रोधान् नेत्रहानिं वदन्ति ॥ १८ ॥

क्रूरैः खेटैः पञ्चमस्थैस्सशुक्रैः
भावस्थाने नीचखेटे विधौ वा ।
योगेशाद्वा दुष्टसंज्ञार्गलस्थे
राजक्रोधात् गर्दभारोहणं स्यात् ॥ १९ ॥

एवं योज्यं लग्ननाथाद्विलग्नात्[1]
द्रेक्काणर्क्षाद्योगदाच्च प्रयत्नात् ।
भूष्णुः ज्ञात्वा सर्वमेतद्दशायां
सौम्यालोकैः सम्भवेयुः शुभानि ॥ २० ॥

॥ इति श्रीबालात्रिपुरसुन्दरी कृपाकटाक्षसमधिगतसमस्त-विद्यावैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्न मालायां नवमोऽध्यायः ॥

## ॥ अथ लग्नभेदाः ॥

चन्द्रस्य लग्नाधिपतेश्च भागान्
संयोज्य तद् द्वादशधा विभज्य ।
लग्नेशभागैः सह योजयित्वा
प्राप्तं भवेत् त्रिप्रवणं हि लग्नम् ॥ १ ॥

तस्मिन् शुभे स्वोच्चखगे धरायाः
पतिर्भवेत् पापखगे दरिद्रः ।
मिश्रे च मिश्रं फणियोगतः स्यात्
मृत्युः शिशुत्वे भयमम्भसः स्यात् ॥ २ ॥

विभज्य नक्षत्रमथो विलग्नात्
आरभ्य नीत्वा रविणैव धीमान् ।
प्राप्ते तु खण्डे तु दशाधिनाथ-
माद्यं समारोप्य वदेत्फलानि ॥ ३ ॥

---

1. ङ. नाथाद् द्रगाणात्

तत्रोच्चगोऽप्युच्चयुतः शुभेन
युतोऽथवा स्यात् प्रभुयोगदाता ।
नीचेऽपि वा नीचयुतेन दृष्टे
दारिद्र्यमाहुः प्रवणा मुनीन्द्राः ॥ ४ ॥

आरभ्य तत्तत् तदनुक्रमेण
दशामधीशात् परिकल्पयित्वा ।
शुभाशुभं सम्यगवेक्षणीयं
द्विपापयोगे मृतिरेव वाच्या ॥ ५ ॥

लग्ने गतान् योगकरस्य भागान्
राशिं च संयोज्य रविक्रमेण ।
वियोज्य लग्नादि तदेव लग्नं
शुभाय कल्प्यं विबुधैः प्रयत्नात् ॥ ६ ॥

त्रिकोणसंस्थे शुभमन्यथा स्यात्
विपर्ययेऽन्यत् खलु पूर्ववत् स्यात् ।
आरूढतोऽपि प्रविचिन्तनीयं
शुभैः शुभं स्याद्विपरीतमन्यैः ॥ ७ ॥

लग्नेशितुः सप्तमपस्य भागान्
संयोज्य राशिक्रमतो वियोज्य ।
प्राप्ताद्विलग्नादपि सौम्ययोगे
योगं वदेत् खेटबलेन विद्वान् ॥ ८ ॥

द्रगाणतो [1]वापि वदेत् परत्र
तदंशकादेवमुदीरयन्ति ।
एतैर्विलग्नैरपि चिन्तनीया
दारादिभावा विबुधाग्रगण्यैः ॥ ९ ॥

भागाधिपस्यापि विधोश्च लग्नान्[2]
संयोज्य पश्चान्नवधा विभज्य ।

1. घ. ऽपि प्रविचिन्तनीयम्  2. च. क. भागान्

चरत्रिकोणादिनवांशरीत्या
    नीतेंऽशलग्नं विबुधा वदन्ति ॥ १० ॥
नीचैस्तथोच्चैः शुभखेचरैर्वा[1]
    दृष्टेंऽशलग्नं च शुभाय भावि ।
अस्माच्च चन्द्रांशदशां विचिन्त्य
    मनीषिणो नित्यमुदाहरन्ति ॥ ११ ॥
लग्नत्रिकोणेशकलाः सुधांशु-
    त्रिकोणराशीशकलाविशेषैः ।
संयोज्य चन्द्रादिरविक्रमेण
    लग्नं वियुक्तं भवतीन्दुलग्नम् ॥ १२ ॥
शुभेषु तत्र स्थितिमत्सु योगं
    वदन्ति सन्तो नृपतेःसमानम् ।
विपर्ययात् राहुयुते सुधांशौ
    क्रमेण नो चेत् परिचिन्तनीयम् ॥ १३ ॥
अत्रैव नीचो यदि लग्नसंस्थः
    राजाधिराजः शुभखेचरे तु ।
कोटीश्वरोऽप्युच्चखगे तु लक्ष-
    सङ्ख्याधिकारी खचरैर्विहीने ॥ १४ ॥
दरिद्रजीवी शुभखेचरेन्द्रैः
    स्थितैः प्रभुः स्याद्बहुभिर्विशिष्य ।
क्रूरैर्धनी विक्रमवान् गुणज्ञः
    तस्मादवश्यं परिचिन्तनीयम् ॥ १५ ॥
वक्तव्यमत्रास्ति विचिन्त्य सर्वं
    तथापि धीमान् नृपतेः सभासु ।
वक्तव्यमत्युत्तममेतदेव
    लग्नं शिवेनैतदुदीरितं मे ॥ १६ ॥

---

1. ङ. चरेन्द्रैः

तिर्यङ्मनुष्यामररुद्रविष्णु-
ब्रह्मादिमानामपि तद्विचिन्त्यम्।
[1]ग्रन्थैरनेकैरलमेतदेव
वरं सभास्थानजयाय धीराः ॥ १७ ॥

[2]सुखाय वक्ष्ये भुवि बालकानां
फलार्थिनां जातकदर्शनेन।
विभज्य राशीन् विकलाः कलाश्च
संयोज्य राशीश्वरशुक्रभागान् ॥ १८ ॥

नीत्वा हि राशिक्रमतो विभागान्
आनीय राह्वादि सुतर्क्षतो वा।
[3]श्रीलग्नमालोच्य ततस्त्रिकोणे
शुभैः शुभानि प्रवदेदयत्नात् ॥ १९ ॥

केचित्तु राहुस्थितिभं विलग्नं
परे तु लग्नेशयुतं विलग्नम्।
होरां परे चन्द्रयुते बिलग्नं
परे घटीलग्नमिति ब्रुवन्ति ॥ २० ॥

संवादतो द्वित्रिविलग्नभेदैः
शुभाशुभानि प्रवदेत् सभासु।
एतानि लग्नानि भृगोस्तनूजात्
प्राप्तानि सर्वज्ञमुनीश्वरेण ॥ २१ ॥

॥ इति श्रीबालात्रिपुरसुन्दरीकृपाकटाक्षसमधिगत समस्तविद्यावैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्नमालायां दशमोऽध्यायः ॥

संपद्दशाः सप्तदश प्रदिष्टाः
मुनीश्वरैः कालविदां सुखाय।

---

1. ङ. इदमर्धं नोपलभ्यते, 2. ङ. इदमर्धमपि न दृश्यते.
3. ग. स्त्रीलग्नम् -

ता एव वक्ष्ये तरुणेन्दुचूड-
कृपाकटाक्षेण यथार्थवृत्तिः ॥ १ ॥

योगार्धनाम्ना च दशा विचिन्त्या
चरस्थिरद्वन्द्वयुतान् विभज्य ।

द्विधा च सप्ताष्टनवक्रमेण
विलग्नभादित्यवदन् मुनीन्द्राः ॥ २ ॥

### तत्र फलम् ।

[1]सौम्येक्षिते स्वोच्चखगेन दृष्टे
दृष्टे शुभैः केन्द्रदशासु सन्तः ।

पूर्णं बलं मध्यममाहुरार्याः
त्रिकोणराशावधमं तदन्ते ॥ ३ ॥

[2]दशा द्वितीया खलु संप्रयोज्या
क्रमेण षष्ठक्रमतश्च केन्द्रात् ।

चरस्थिरद्वन्द्वविशेषतोऽयं
न्यायो मुनीन्द्रैः कथितः पुरैव ॥ ४ ॥

चरे विलग्ने तु ततः स्थिरे तु
चरत्रिकोणात् बलिनोऽपरस्मिन् ।

एवं नयेत् बुद्धिबलेन धीमान्
विचार्य सर्वं प्रवदेन् नराणाम् ॥ ५ ॥

इयं प्रदक्षिणयोगार्धदशा। संयोगविभागौ चरदशायामेकः ।
चरदशावर्षाणि उत्तरत्र वक्ष्यन्ते। इयमन्या योगार्धदशा ॥

मेषादिषट्के तु ततस्तदीशपर्यन्तवर्षेण पुनश्च योज्यम् ।
तुलादिषट्के तु ततश्च मीनपर्यन्तवर्षेण खगैः स्वसंस्थैः ॥ ६ ॥

द्वादशसंख्या नेया तेभ्यस्सप्ताष्टनव च संयोज्या ।
द्वेधा भङ्क्त्वा प्राप्ता योगदशेयं मुनीश्वरैः प्रोक्ता ॥ ७ ॥

---

1. ङ. इदमर्धं नोपलभ्यते 2. ङ. इदमर्धं न दृश्यते

ओजे लग्ने तत्स्यात् युग्मे लग्ने तत्सन्मुखं ग्राह्यम् ।
स्त्रीणामेतत्सर्वं विपरीतं ग्राह्यमेव मुनिवर्यैः ॥ ८ ॥

॥ अथ फलकथनप्रकारः ॥

चन्द्रः चतुर्थपञ्चम नवमसंस्थोऽथवा यस्याम् ।
[1]राहुः तत्र दशायां राज्यप्राप्तिं नरस्य कालज्ञाः ॥ ९ ॥
[2]केन्द्रत्रिकोणसंस्थो दृष्टोऽप्यथवा सुधाकरो यस्याः ।
तस्यामाहुर्योगं नृपतेः योगोद्भवस्य मनुजस्य ॥ १० ॥
अत्र तु सौख्यकराः स्युः द्रष्टारो देवपूज्यभृगुचन्द्राः ।
केतुबुधौ च तथोच्चौ त्वन्ये क्लेशप्रदाः खेटाः (हि विज्ञेयाः) ॥ ११ ॥
विस्तरभयान्मयेदं वक्त(व्यमत्र) नोच्यते सर्वम् ।
धीमान्विचार्य सर्वं ब्रूयाल्लोके मृषा न किञ्चिदिदम् ॥ १२ ॥
लग्नाधिपाद्य ओजे खेटः पश्चात्स एव धातात्र ।
तस्मिन् स्वोच्चगते वा शुभर्क्षगे वा भवेन्नरो धनिकः ॥ १३ ॥
शत्रुगृहे निर्धनः स्यात् नीचगतो रोगकारकः प्रोक्तः ।
दारिद्र्यं क्रूरयुते तस्मान्नेया तथैव योगार्धा ॥ १४ ॥
चरभे क्रमेण नेया स्थिरभे षष्ठक्रमेण केन्द्रवशात् ।
उभये फलं तु तस्मात् पदतो दृष्टत्रिकोणगैर्वाच्यम् ॥ १५ ॥
धातुर्भावाः योज्याः पदमपि तद्वद्विचार्य दैवज्ञः ।
मातुः पितुस्तथैवं दशया परया वदेत् फलं सम्यक् ॥ १६ ॥
आरूढाद्योगार्धा दशां नयन्ति क्रमेण दैवज्ञाः ।
तस्मिन् ह्योजे तस्माद्युग्मे तत्सन्मुखं ग्राह्यम् ॥ १७ ॥
चरभे स्थिरोभययोः क्रमेण कथयेत् फलानि शुभयोगात् ।
वेश्मनि सुते [3]शुभोच्चे राजा स्यात् राजयोगसञ्जातः ॥ १८ ॥
गुरुचन्द्रशुक्रदृष्टौ पुत्रोत्पत्तिं तु योगिनो ब्रूयुः ।
क्रूराहिदृष्टियोगे निर्धनं ब्रूयात् कदापि न मृषा स्यात् ॥ १९ ॥

---

1. ङ. इदमर्धं न दृश्यते
2. ङ. इदमप्यर्धं नोपलभ्यते
3. शुभाश्चेत् ।

एवं दशानां शुभतारतम्यात् संवादतः संसदि बुद्धिशाली ।
आलोच्य सर्वं प्रवदेत्कदापि मृषा भवेन्नैव [1]स जीव एव ॥ २० ॥

**[2]इति श्रीबालात्रिपुरसुन्दरीकृपाकटाक्षसमधिगत समस्त-विद्यावैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्न-मालायामेकादशोऽध्यायः ॥**

योगाधर्यां भुक्तिक्रमतो राशिक्रमेण वा ज्ञेया ।
अन्ये नवांशरीत्या केचित् द्रेक्काणतोऽपि जगुः ॥ १ ॥
अंशविभागस्त्वोजे क्रमेण युग्मे तु विपरीतम् ।
राश्यंशकानि क्रमतः वदन्ति मुनयोऽखिलशास्त्रज्ञाः ॥ २ ॥
द्रेक्काणं द्वादशधा विभज्य राशिक्रमेण पद्योगात् ।
आनीय खेचरे तु प्रकृताद्दक्षान् नयन्ति तत्त्वज्ञाः ॥ ३ ॥
[3]राशौ बलेन युक्तः राहुर्यदि संस्थितो तदा तस्याम् ।
अन्ते गृहादिनाशं राजभयं देहविप्लवं कुरुते ॥ ४ ॥
तत्रैव भौमयुक्ते गृहदाहं व्रणभयं सदा भीतिम् ।
मध्ये भङ्गं शनिना विधुना क्षीणेन नृपकलहम् ॥ ५ ॥
गुरुबुधभृगुपूर्णसुधाकरराश्यधिपैर्योगदेन संयुक्तः ।
राशिः कुरुते भूपं नयगुणपूर्वं दशां च पुण्यबलाम् ॥ ६ ॥
जीवो यत्र दृगाणे सौम्ये कुर्यात् शुभानि तत्खण्डे ।
क्रूरेऽपि तद्वदेवं द्वययोगे सर्वमेव विचिन्त्यं स्यात् ॥ ७ ॥
उक्तो न्यायो ग्राह्यः दशाविपाकेषु सर्वत्र ।
अशुभमवश्यं वाच्यं दशावसानेषु दैवज्ञैः ॥ ८ ॥

**॥ [4]इति श्रीबालात्रिपुरसुन्दरीकृपाकटाक्षसमधिगतसमस्तविद्या-वैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्नमालाया-मेकादशोऽध्यायः ॥**

अथ प्रसिद्धं ह्युडुदायभेदं
वक्ष्ये बुधानां हितकारणाय ।

---

1. च. कदाचिदेषः
2. च. क.ख. इदं नोपलभ्यते
3. ङ. श्लोकद्वयं नोपलभ्यते
4. ङ. ग इदं नोपलभ्यते

पूर्वं मयोक्तः खलु योगदाख्यः
ततः सुधांशोर्बलिनो हि नेयाः ॥ १ ॥

त्रिकोणसंस्थैरपि रन्ध्रसंस्थैः
रिप्फस्थितैश्चापि शुभैः शुभाः स्युः ।
तत्र स्थितैः क्रूरखगैः विरोधः
[1]नीचैस्तु नैच्यं समुदाहृतं स्यात् ॥ २ ॥

चन्द्रात्तथा योगदसंज्ञिताद्वा
भुजङ्गराजो यदि संयुतः स्यात् ।
नयेद् दशास्ता विपरीततो हि
क्रमेण केतौ कथयन्ति तज्ज्ञाः ॥ ३ ॥

पापैर्युतो नीचखगैः त्रिकोणः
दशेशराशिर्यदि रोगपेन ।
मृतिस्तदानीमथवार्थहानिः
मिश्रे तु मिश्रं विपरीतमन्यैः ॥ ४ ॥

भुक्तिक्रमेणायुजि युग्मराशौ
वदन्ति सन्तो विपरीतभावान्
भुक्तौ तु तद्वच्च फलानि सर्व-
मन्यत् प्रसिद्धं [2]पुनरन्यशास्त्रैः ॥ ५ ॥

एवं दशा लग्नपतेश्च योज्या
फलानि चैवं हि विशेष एषः ।
चतुर्थराशावथ पञ्चमे वा
शुभोच्चयोगे शुभमेव सर्वम् ॥ ६ ॥

चन्द्रे च योगप्रदखेचरे च
चरे क्रमेण स्थिरभे च तद्वत् ।
षष्ठक्रमेणोभयभे च केन्द्रा-
दिति प्रयोज्या खदशा हि धीरैः ॥ ७ ॥

---

1. ग. नीचस्थितैः नैच्यमुदाहृतं   2. च. हि नरस्य कुर्यात्

केन्द्रत्रिकोणोपचयैः फलानि
शुभैः शुभानि प्रवदेन् नराणाम् ।
क्रूरैस्तथा नीचखगैश्च हानिं
पापद्वये मृत्युमुदाहरन्ति ॥ ८ ॥

क्षीणोऽपि चन्द्रः शुभ एव चास्मिन्
दशाविपाके तु बुधस्तथैव ।
ध्वजस्तु निर्याणविधौ विरोधी
विशिष्य सूर्योऽपि तथैव मान्यः ॥ ९ ॥

भागान् दशेशस्य च शीतरश्मेः
कलाक्रमेण प्रतियोज्य विद्वान् ।
राशिक्रमात् खेटविशेषतो वा
वियोज्य शिष्टः खलु लग्नराशिः ॥ १० ॥

तस्माद्दशा सा खदशा क्रमेण
विपश्चिता संप्रतिपादनीया ।
शुभैस्तथा स्वोच्चगतैः शुभं स्यात्
क्रूरैस्तथा नीचगतैश्च हानिः ॥ ११ ॥

यत्र स्थितो भोगिपतिस्तदानीं
विशिष्य हानिः विभवस्य वाच्या ।
क्षीणेन्दुदृष्टेऽप्यशुभेन युक्ते
मृत्युं मनःक्लेशमुदाहरन्ति ॥ १२ ॥

दशासु सर्वास्वपि योजनीयो
न्यायः प्रयत्नेन विचक्षणेन ।
शुभैर्युतः शोभनखेचरेन्द्रैः
युतश्च पश्चाच्छुभदः [1]स राशिः ॥ १३ ॥

नीचेन दृष्टोऽपि च राहुदृष्टः
क्रूरैर्युते पृष्ठखगैः च हानिः ।

---

1. च. तदा स्यात्

तदीशितुः. द्वित्रिचतुष्टयेषु
शुभोऽपि यस्याथ शुभानि कुर्यात् ॥ १४ ॥
तस्यां दशायामपि योगमाहुः
नीचे तदीशेऽपि मुनीन्द्रवर्याः ।
योगाधिपे नीचगते च नैच्य-
मुच्चं गते तून्नतवंशजन्मा ॥ १५ ॥
नीचं विना स्वोच्चखगेन दृष्टः
तद्वत्पदादित्यपरे वदन्ति ।
उच्चेन चन्द्रेण युतोऽपि दृष्टः
नीचोऽपि सर्वत्र बली खगः स्यात् ॥ १६ ॥
मुनीश्वराणां हृदयङ्गमेयं
दशा मयोक्ता सुधियां हिताय ।
अतः परं दृष्टदशां ब्रवीमि
सर्वत्र दृष्ट्या पदतोऽपि धीराः ॥ १७ ॥
द्रष्टुः परस्माद्यदि खेटयोगः
पूर्वस्य राशेरपि हीनता स्यात् ।
पदक्रमादेवमिह प्रयोज्या
फलानि सौम्यर्क्षवशाद्वदन्ति ॥ १८ ॥
शुभग्रहाणामपि संयुतौ स्यात्
योगस्तदा पापखगैर्विनाशः ।
नीचे तथा भोगिगृहे च मृत्युं
वदन्ति धीरा यवनाः परत्र ॥ १९ ॥

॥ **इति श्रीबालात्रिपुरसुन्दरीकृपाकटाक्षसमधिगत समस्त-विद्यावैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्न-मालायां द्वादशोऽध्यायः** ॥

अथो रहस्यं मुनिभिः प्रणीतं
ज्योतिर्विदां सौख्यकरं प्रवक्ष्ये ।
ज्ञात्वा यमार्याः सततं सभासु
कण्ठीरवत्वं क्षणतः प्रयान्ति ॥ २० ॥

लग्नेशितुर्योगदखेचरस्य
भागान् विसंयोज्य पदक्रमेण ।
अजादितो द्वादशधा विभज्य
प्राप्तं हि लग्नं खलु दिव्यलग्नम् ॥ २१ ॥

(व्याख्या) लग्नेश्वरस्यापि च योगदस्य च स्फुटं संयोज्य मेषादिक्रमेण अजादि द्वादशधा विभज्य द्वादशधा गतराशीन् अपास्य मेषादितः नयने यल्लग्नं भवति तदत्र दिव्यलग्नम्। योगदाभावे केवलमादाय द्रष्टव्यम्। योगदकेवलयोरभावे चन्द्रलग्नेश्वरस्फुटवशात् लग्ननिर्णय इति उत्तरश्लोकेन वक्ष्यति।

योगप्रदो यत्र न तत्र चन्द्रात्
लग्नाधिपाच्चैवमुदाहरन्ति ।
केचित्तु दिव्यादपि योगदाच्च
प्रकल्पयन्त्यत्र तु तन्न युक्तम् ॥ २२ ॥

एवं कृतं लग्नगृहं शुभोच्च-
स्वक्षेत्रगः पश्यति चेन् महीपः ।
स पापराशिर्यदि पापयुक्तः
नीचेन दृष्टोऽपि भवेद्दरिद्रः ॥ २३ ॥

[1]ओजे विलग्ने तु तदेव लग्नं
युग्मे तु तत् सन्मुखमामनन्ति ।
तस्मात् पदं पूर्ववदूह्य पश्चात्
सर्वं नराणां प्रवदेत् सभासु ॥ २४ ॥

लग्नं नराणामिदमेव योज्यं
प्रायः प्रभूणां न च पामराणाम् ।
दशाः च तस्माद्द्विविधाः च योज्याः
कदापि नो याति मृषापदं सः ॥ २५ ॥

तत्सप्तमस्थानविभोर्विपश्चित्
द्रेक्काणमालोक्य विशिष्टबुद्धिः ।

1. घ. सार्धश्लोकोऽत्र न दृश्यते.

तस्मिन् शुभे स्वोच्चखगेन दृष्टे
वदेत्तदामीमपि राजयोगम् ॥ २६ ॥

नीचेन दृष्टेऽप्यशुभेन युक्ते
भवेद्दरिद्रः कुमतिः कुशीलः ।
मिश्रेण मिश्रं बलनिर्णयेन
बलाबलज्ञाः समुदाहरन्ति ॥ २७ ॥

लग्नेशितुः सप्तमनायकस्य
स्फुटं सुधीः पूर्ववदेव वीक्ष्य ।
प्रकल्प्य लग्नं शुभखेचरेन्द्रैः
दृष्टे शुभं राशिवशाद् वदेत ॥ २८ ॥

द्रेक्काणतस्तस्य हि लोकमाहुः
तदंशतो देवविवेचना स्यात् ।
अयं विशेषोऽत्र दृगाणमेव
प्रकल्प्य लग्नं तत एव भावान् ॥ २९ ॥

विचारयेल्लग्नवदेव धीमान्
फलानि राज्ञां प्रवदेत् सभासु ।
तस्मिन् रवौ स्यात् परमेशलोकः
शुभेन दृष्टेऽप्यशुभेन हीनः ॥ ३० ॥

चन्द्रेण पूर्णेन तदुच्चनाथ-
स्योक्तं फलं भूमिसुतस्य लोकम् ।
पातालमाहुः [1]मनु[विधु]जस्य लोकं
धातुर्गुरोः साम्बशिवस्य लोकम् ॥ ३१ ॥

शुक्रेण गन्धर्वपदं शनौ तु
बुधर्क्षगे विष्णुपदे निवासः ।
केतुस्तु कैवल्यफलप्रदाता
राहोस्तु नित्यं निरयं वदन्ति ॥ ३२ ॥

1. च. ङ. क. वणिजस्तु

संक्षेपतः प्रोक्तमिदं नराणां
बलानुगुण्येन वदेद्यथार्थम् ।
योगप्रदो लग्नपतेः यदि स्यात्
केन्द्रत्रिकोणोपचयेषु विद्वान् ॥ ३३ ॥

वदेत्तदानीमपि राजयोगं
विपर्यये स्यान् मनुजो दरिद्रः ।
प्रायः प्रभूणामिदमेव दृश्यं
संवादतो योज्यमिदं [1]विलग्नात् ॥ ३४ ॥

व्यये तृतीयाष्टमनायकश्चेत्
योगप्रदो दुष्टफलप्रदाता ।
[2]अंशाद् दृगाणादपि लग्ननेतुः
सुस्थानसंस्थो यदि योगदाता ॥ ३५ ॥

तथापि शस्यं शुभमेवमेव दशास्तु योज्याः खलु योगनेत्रा ।

## ॥ गोचरतः फलविचारः ॥

योगप्रदात् गोचरतो यदि स्यात्
रविः शुभैः संयुतिभाक् तदानीम् ।
राज्ञः प्रसादं विपरीतमेव
क्रूरैर्युते नीचगते च नित्यम् ॥ ३६ ॥

चन्द्रो यदा योगदखेचरेण
युतस्तदा सौख्यफलप्रदाता ।
व्रणप्रदाता धरणीसुतः स्यात्
प्रायो बुधः वैदिकसौख्यदाता ॥ ३७ ॥

गुरुर्नृपप्रीतिकरो भृगुस्तु
स्त्रीराजसंमानकरो विशिष्य ।
शनिः मनःक्लेशकरः फणीन्द्रः
दुष्कीर्तिदुर्वृत्तिकरोऽपकारी ॥ ३८ ॥

---

1. च. वदन्ति 2. ङ. अयं श्लोकः न दृश्यते

एवं त्रिकोणेषु च सङ्गमेषु
दशानुगुण्येन वदेत् फलानि ।
ऊर्ध्वं पुनर्दृष्टिवशाच्च तद्वत्
शुभैः शुभाप्तिर्विषमे तदन्यत् ॥ ३९ ॥

योगप्रदः शोभनखेचरैस्तु
व्ययाधिनेत्रा यदि संयुतः स्यात् ।
विवाहयज्ञादिमुखेन काले
वदेत्तदानीं धनहानिमेव ॥ ४० ॥

॥ अथ स्फुटवशात् गोचारनिर्णयः ॥

योगप्रदस्यापि च लग्ननेतुः
स्फुटं सुधीः योज्य दिने दिने च ।
द्विधा विभक्ते खलु यद्विशिष्टं
लग्नं तदानीय ततोऽशकं च ॥ ४१ ॥

प्रकल्पनीयस्फुटयोगलग्ने
रवेर्यदा गोचरतः प्रवेशः ।
नृपाद्धनाप्तिः बलिनोऽन्यथा तु
धनस्य हानिः नृपमूलतः स्यात् ॥ ४२ ॥

तत्रैव चन्द्रो बलवान् यदि स्यात्
द्वीपान्तरात् राजधनागमः स्यात् ।
भौमेन हानिं कलहं व्रणञ्च
दाहं गृहस्यापि वदन्ति सन्तः ॥ ४३ ॥

बुधेन तु ज्ञातिधनं विवादात्
वाणिज्यवेश्यासुखलाभमाहुः ।
गुरौ तु पुत्रादिसुखं विशिष्य
पुण्यप्रसक्तिं भृगुजे तु राज्ञः ॥ ४४ ॥

संमानमत्यन्तधनागमञ्च
शनौ तु रोगं कलहं वदन्ति ।

राहौ भुजङ्गात् भयघातपातं
केतौ तु पुण्यस्थलतीर्थवासम् ॥ ४५ ॥
एवं दशायामधिपस्य लग्न-
नाथस्य योज्यस्फुटराशिभागान् ।
दैवज्ञचूडामणिरेवमेव
दशाविभागे च फलं ब्रवीति ॥ ४६ ॥
गुरोः स्फुटं योगपतेः स्फुटेन
संयोज्य लब्धर्क्षवशात् सुतर्क्षे ।
गुरुप्रवेशो यदि गोचरे स्यात्
तदा वदेत् पुत्रजनिं नरस्य ॥ ४७ ॥
एवं हि शुक्रे तु विवाहमाहुः
कुजे भवेत् भ्रातृजनिर्बुधे तु ।
ज्ञातिप्रशस्तिः बलतः शुभानि
विपर्यये हानिकरा भवन्ति ॥ ४८ ॥
रन्ध्रेशलग्नाधिपयोः स्फुटेन
त्रिकोणराशौ यदि लब्धतः स्यात् ।
शनिर्भुजङ्गो यदि वा तदा स्यात्
मृत्युर्दशास्वेवमवेक्षणीयः ॥ ४९ ॥
नीचो भवेन्नैच्यकरो नरस्य
पापस्तथा [1]भङ्गकरो हि नित्यम् ।
कुर्युस्तथोच्चो बहुमानमेवं
योज्यं हि सर्वत्र विचक्षणेन ॥ ५० ॥
क्रूरांशकः क्रूरयुतो यदि स्यात्
तदा भवेद्राजभयेन भङ्गः ।
युतिर्भुजङ्गेन तु दुष्टकर्मा
कारागृहप्राप्तिमुपैति सद्यः ॥ ५१ ॥

---

1. च. भाग्यहरो

अयं योगः जननकालेऽपि द्रष्टव्यः ।

वक्तव्यमत्रास्ति बहुप्रजानां
विचिन्त्य धीरः प्रवदेत् सभासु ।
रहस्यमध्यायममुं प्रयत्नात्
कदापि नो याति मृषापदं सः ॥ ५२ ॥

**॥ इति श्रीबालात्रिपुरसुन्दरीकृपाकटाक्षसमधिगत समस्त-विद्यावैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्न-मालायां त्रयोदशोऽध्यायः ॥**

खेटाभिधां मध्यदशां प्रवक्ष्ये
ज्योतिर्विदां सौख्यकरीं नरस्य ।
बलाधिको यः खगमस्तदादि
बलाबलं राशिवशान् नराणाम् ॥ १ ॥

चन्द्रोऽधिकश्चेत् तत एव नेयम् ।
ह्यात्माधिकश्चेदपि तत्तदादि ॥ २ ॥

बलिनो ह्यात्मनो वा
बलिनो ब्रह्मणोऽथवा नेया ।
स्थिरसंज्ञराशिभेदात्
क्रमतो नेया ह्यथवाक्रमतः ॥ ३ ॥

पश्चाद् ग्रहो यदि बली स हि कारकोऽत्र
तस्माद्दशामपि नयेत बलिनोऽपि नित्यम् ।
धाता क्रमेण बलवान् यदि खेटतोऽपि
तस्माद्व्ययस्थितिखगान्तमियं दशा स्यात् ॥ ४ ॥

राशीश्वरो यदि बलादुभयोर्बली चेत्
तस्मात्तदन्तमिति संकथयन्ति तज्ज्ञाः ।
द्वित्रादिखेचरविधौ बलवद्ग्रहात् स्या-
दित्येवमाहुरखिलाः मुनयो धरिञ्याम् ॥ ५ ॥

ओजे विलग्नभवने तु तदादि नेया
युग्मे तु सन्मुखवशात् परिकल्पनीया ।

अन्तर्दशात्र नवधा परिकल्पनीया
द्रेक्काणमार्गमनुसृत्य परे वदन्ति ॥ ६ ॥.

सौम्यैस्त्रिकोणनिलयैरशुभैः परत्र
चेत् संस्थितैः शुभफलं नियतं वदेत ।
नीचे स्थिते यदि तदा नियमेन नैच्यं
सन्तो वदन्ति शुभदृष्टिविवर्जिते तु ॥ ७ ॥

अत्रायमेष्यति विशेषगुणो नराणां
चन्द्रार्कजौ यदि दशाभवने तदानीम् ।
वाताद्भयं यदि बुधो निजविद्ययैव
तत्कालजीवनमिति प्रवदन्ति सन्तः ॥

पापो भुजङ्गमयुतो यदि तत्र भौमः
शस्त्राग्निभिर्मरणमेति दशाविपाके ॥ ८ ॥

चन्द्रः क्षितिजेन युतः क्रूरयुतो वाथ नीचसंदृष्टः ।
व्रणसन्निपातदोषं कुरुतेऽवश्यं दशाच्छिद्रे ॥ ९ ॥

सूर्यः क्षितिजादिखगैः युक्तो यदि वीक्षितो दशाराशौ ।
राज्ञो मुद्राभङ्गं कुरुतेऽवश्यं ह्यसंशयं लोके ॥ १० ॥

एवं ग्रहसंयोगे द्रष्टव्यं सर्वदा शुभमशुभं वा ।
भुजङ्गमो दशायां चेत् व्यये सर्वस्वहानिदः ॥ ११ ॥

चन्द्रेण युतो दृष्टः कुर्यात् प्राणान्तिकं दुःखम् ।
क्षितिजेन युतो दृष्टः कुर्याच् चोराग्निभिः नाशम् ॥ १२ ॥

रविणा राज्ञा नाशं बुधेन विवादाच्च बन्धुमुखात् ।
गुरुणा ब्राह्मणमूलात् पुत्रमुखाद्वापि निर्दिशेन्मतिमान् ॥ १३ ॥

शुक्रेण स्त्रीमूलात् राजमुखाद्वा विनिर्दिशेत् नाशम् ।
शनिना प्रेष्यमुखाद्वा भूमूलाद्वा विनाशः स्यात् ॥ १४ ॥

केतौ क्षीणगृहालयदेवागारादिनिर्माणात् ।
द्वित्रादिखेचरयुते भुजङ्गमे तन्मुखेन नाशः स्यात् ॥ १५ ॥

राहौ नीचे तद्वत्ग्रहदृष्टे निधिवशात् वदेन्नाशम् ।
एवं लाभस्थाने स्थितैर्ग्रहैः लाभ एव निर्देश्यः ॥ १६ ॥
एवं विलग्नपतिना द्रेक्काणाद्योगदाद्विनिर्देश्यः ॥

दशाधिनाथो यदि नाशपेन युतस्तदा द्रव्यविनाशकारी ।
धनाधिनाथेन युतो दशेशः धनस्य लाभं सततं करोति ॥ १७ ॥

कर्ता यदि स्यात् खगमो ह्येन भावाधिनाथेन युतस्तदा स्यात् ।
एवं तदन्यत्र विचारणीयं योगप्रदाश्चैवमुशन्ति तज्ज्ञाः ॥ १८ ॥

दशाराशीश्वराद्रन्ध्रनाथो वा धनमाश्रितः ।
तदा ऋणेन सततं बाधितः क्लेशवान् नरः ॥ १९ ॥

अन्तर्दशायामेवं हि योजनीयं विदुर्बुधाः ।
इयं दशा हि प्रबला नराणां च शुभाशुभे ॥ २० ॥
गोचरैः खगमैरेवं निर्दिश्य च बलाबलम् ।
दशारम्भे दशामोक्षे राशिं ज्ञात्वा फलं वदेत् ॥ २१ ॥

दशाविमोक्षे राशौ तु—यदि राहुः स्यात्तदापि हानिः स्यात ।
जननादि वत्सराणां संख्यां कृत्वा चरादिमार्गेण ॥ २२ ॥
प्रतिराशि प्रतिवत्सरमिति गणयेत्सर्वदा नरो मतिमान् ।
एवं गणने यस्मिन् दशावसानं भवति राशौ हि ॥ २३ ॥
तद्राशिवशाद्योज्यं फलं च सद्यः सदाचारैः ।
राशौ च दशारम्भे शुभे शुभं स्याद्विपर्यये त्वशुभम् ॥ २४ ॥

॥ इति श्रीबालात्रिपुरसुन्दरीकृपाकटाक्षसमधिगत समस्त-
विद्यावैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्न-
मालायां चतुर्दशोऽध्यायः ॥

विलग्नभवनं बलं यदि तदापि नेया दशा
ततोऽपि बलवत्तरं यदपि सन्मुखं तत्ततः ।
दशानयनमिष्यते बलतदन्यमिश्रात्मनां
क्रमेण च [1]सुधीवरैरिति च सत्यमौनीरितम् ॥ १ ॥

1. ङ. सुधीर्बलैः

दशाप्रविष्टखगमस्थितबलराशीश्वरात् दशा नेया ।
प्रकारक्रमतः खलु सर्वत्रास्यां दशायां हि ॥ २ ॥

[1]धर्मेशात्खेटानां राशीनां तत्पवित्रराशिवशात् ।
अन्तर्दशाविशेषान् कथयामि सुविहितं समुद्दिश्य ॥ ३ ॥

सततं नवधा भङ्क्त्वा राशेः प्रथमं ततस्तदंशस्य ।
एवं सर्वत्रोह्यं पश्चादप्येवमेव स्यात् ॥ ४ ॥

फलानि शुभखेचरेक्षणवशाच्छुभं सर्वदा
कदाप्यशुभखेचरेक्षणवशादरिष्टं फलम् ।
शुभाशुभपरीक्षणे तदपि [2]भावभेदाद्वदे-
दितीव मुनयोऽवदन्नखिलशास्त्रपारं गताः ॥ ५ ॥

क्रूरश्शुभर्क्षाधिपतिः शुभः स्यात्
सौम्योऽपि पापोऽशुभभावनाथः ।
एवं हि विज्ञाय सुधीः नराणां
शुभाशुभत्वं प्रवदेत् फलानाम् ॥ ६ ॥

विलग्नवद्दशाराशे(शि)रपि योज्यस्सदा बुधैः ।
दुर्भावाधिपयुक्तश्चेत् क्रूरः सौम्योऽत्र सर्वदा ॥ ७ ॥

क्रूरोऽपि शुभभावानामधिपेन युतः शुभः ।
नीचो भुजङ्गमयुतो नीचखेटयुतोऽपि च ॥ ८ ॥

सर्वदा क्रूर एवात्र दशायामिति निर्णयः ।
फलं भावपरिज्ञानात् सर्वथात्र प्रशस्यते ॥ ९ ॥

## ॥ अथान्या दशा ॥

मेषादि वास्य ग्रहतो दशा स्यात्
तुलादि वा पृष्ठखगाधिपात् स्यात् ।
बलप्रकारो बहुवर्षहेतुः
शुभाशुभं खेटवशाद्वदन्ति ॥ १० ॥

---

1. ख. नवमे
2. वा दशेशात्

[1]सौम्येक्षिते वान्त्यगृहे त्रिकोणे
[2]शुभेक्षिते वा शुभमाहुरार्याः ।
[3]नीचेक्षिते वान्त्यगृहे शुभैर्वा
विदेशयात्रां प्रवदन्ति धीराः ॥ ११ ॥

अन्तर्दशा राशिवशाद्विभक्ता
कर्ता तु पश्चाद्ग्रह एव राशेः ।
पदं च पश्चाद्ग्रहतः प्रकल्प्यं
दृगाणभं राशिवशाद्वदन्ति ॥ १२ ॥

एतद्दृगाणे यदि नीचखेटः
तदा नरः स्यान्नरकाय नूनम् ।
एवं शुभैः स्वर्गपदं व्रजन्ति
केतोस्तु कैवल्यपदं सदा हि ॥ १३ ॥

यद्देवताको यः खेटःतत्तल्लोकं विनिर्दिशेत् ।
यस्यां दशायां मरणं पूर्वं तल्लोकसंश्रयः ॥ १४ ॥

ततस्तदस्तभवनग्रहलोकं विनिर्दिशेत् ।
ततो द्वितीयभवनग्रहलोकमनन्तरम् ॥ १५ ॥

एवमेवं नयेद्विद्वान् उपर्यपि विचार्य तु ।
राहुर्यस्मिन् गृहे तत्र जन्मारम्भं विनिर्दिशेत् ॥ १६ ॥

केतोः समासिश्चेत् पूर्वं कैवल्यं सर्वदा भवेत् ।
यस्मिन् राशौ शुभाः खेटाः तस्मिन् लोकेऽधिकं शुभम् ॥ १७ ॥

यस्मिन् राशौ तथा नीचाः तत्र स्यान्निरयो ध्रुवम् ।
मिश्रे मानुषजन्मा स्यात् इति सर्वज्ञभाषितम् ॥ १८ ॥

तस्मात् त्रिकोणभे मन्दे संन्यासार्तिं विनिर्दिशेत् ।
पञ्चमाधीश्वरयुतस्त्वातुरन्यासदायकः ॥ १९ ॥

---

1. च. म्यस्थिते
2. च. भस्थिते
3. च. चस्थिते

गुरुणा वा युतो दृष्टः क्रमसंन्यासवान् भवेत् ।
भुजङ्गमयुतो दृष्टः पाषण्डो भवति ध्रुवम् ॥ २० ॥

नीचचन्द्रभुजङ्गाभ्यां दृष्टो यदि दिगम्बरः ।
कुजचन्द्रयुतो दृष्टः कौलभाक् तु भवेन् नरः ॥ २१ ॥

अवधूतो भवेत् केतोः शनियोगे न संशयः ।
एवमस्माद् द्रगाणाच्च प्रसिद्धाच्च द्रगाणभात् ॥ २२ ॥

विचार्य मतिमान् सम्यक् फलं ब्रूयाद्विचक्षणः ।
स्त्रीणां मीनादितो नेया बलतः कन्ययाऽथवा ॥ २३ ॥

व्युत्क्रमात्पृष्ठखेटान्तं दशासंवत्सरान् विदुः ।
द्रगाणांशककुलत्तिस्तु पुंवदेवात्र योजयेत् ॥ २४ ॥

व्युत्क्रमात् परलोकं च व्युत्क्रमेणैव योजयेत् ।
द्रगाणकोणभे मन्दे रोगिणी वा तपस्विनी ॥ २५ ॥

नीचैः नीचव्रता सोच्चैः शुभव्रतपरायणा ।
क्रूरैः क्रूरव्रतपरा पतिनिन्दापरायणा ॥ २६ ॥

भुजङ्गमेन सततं कुलटावृत्तिमाश्रिता ।
नीचदृष्टौ जटाधारिण्यथवा चौर्यकर्मकृत् ॥ २७ ॥

कुजे चन्द्रयुते दृष्टे मद्यपानरता भवेत् ।
नीचे चन्द्रे कृशा दीना पूर्णलक्षणसंयुता ॥ २८ ॥

रवौ राजगृहावासेत्येवं सर्वत्र योजयेत् ।
द्वादशांशविभेदेन स्त्रीणां ब्रूयात् फलाफलम् ॥ २९ ॥

नवांशभेदतः पुंसां पदतो वापि योजयेत् ।
इयं हि संवादवशात् प्रबला हि सदा नृणाम् ।
अत्रास्ति बहु वक्तव्यं तमूहित्वा वदेत् बुधः ॥ ३० ॥

॥ इति श्रीबालात्रिपुरसुन्दरीकृपाकटाक्षसमधिगतसमस्त-
विद्यावैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्न-
मालायां पञ्चदशोऽध्यायः ॥

## ॥ अथ निसर्गदशा ॥

भागांस्तथा भागविदः कलाश्च
विशिष्टसंख्यामभितो वियोज्य ।
मासान् स्थितान् मासवशादशेषं
निर्णीय विद्वान् प्रवदेत् सभासु ॥ १ ॥

अयं विशेषोऽत्र सुरद्विषस्तु
शनैश्चरे योगमुदाहरन्ति ।
केतोश्च भौमेन तु संयुतिः स्याद्
अतो निसर्गाभिधया प्रशस्ता ॥ २ ॥

एवंविधां खेटदशां निसर्गां
विभज्य भागक्रमतो हि विद्वान् ।
शुभैः शुभं पापखगैश्च दुःखं
मिश्रे च मिश्रं प्रवदेदतन्द्री ॥ ३ ॥

भावा दशाः राशिवशात् प्रकल्प्याः
सर्वत्र सद्भिः किल शास्त्ररीत्या ।
यत्रोच्यते तत्र पदप्रक्लप्तिः
दशाधिनेतात्र तु कारकः स्यात् ॥ ४ ॥

एनां दशां दिव्यविलग्नतोऽपि
नयेदतन्द्री त्वितराच्च लग्नात् ।
राशीश्वरात् खेटपतेः विलग्नात्
तथा त्रिधा खेटदशाविभागः ॥ ५ ॥

ततश्च तां खेटगतेर्विभक्तां
सूर्यक्रमाद् भुक्तिरिति प्रसिद्धिः ।
केचित्तु युग्मोजवशाद्वदन्ति
पदक्रमेणेति परे वदन्ति ॥ ६ ॥

यथामति प्रेक्ष्य वदेत् सभायां
बलाबलाद्वाप्युपदेशतो वा ॥ ६१ ॥

इन्दुनेत्रनवविंशतिक्रमात्
धृतिःकृतिः पञ्चाशत्क्रमतो नृणाम् ।
चन्द्रारेन्दुजशुक्रसुराणां
रविमन्दानां किल संख्याः स्युः ॥ ७$\frac{१}{२}$ ॥

एवं त्रिधा तामपि योजयित्वा
दशां ततो द्वादशधा वियोज्य ।
अथो विलग्नादथवाधिनेतुः
भृगोर्दशामस्य दशां तदीशात् ॥ ८$\frac{१}{२}$ ॥

चन्द्राद्रवेरंशुमतोऽर्कसूनोः
तद्राशिकोणे मरणं पतङ्गे ।
अथैतदंशक्रमतो विपश्चित्
कुजांशरीत्या क्रमतो वियोज्य ॥ ९$\frac{१}{२}$ ॥

[1]लग्नत्रिकोणे चरभाद् बलाढ्यां
नयेदिति ह्यन्तरखेटयोगः ।
चन्द्रो यदि स्याद्बलवान् तदादि
खेटोऽथवा चेत् बलवान् ततः स्यात् ॥ १०$\frac{१}{२}$ ॥

बलाबलं योज्य सुधीः सभायां
फलं च नित्यं खलु योजनीयम् ।
भावास्तु खेटक्रमतोऽत्र योज्याः
कर्ता लवेशः परिकल्पनीयः ॥ ११$\frac{१}{२}$ ॥

लवेश्वरे क्रूरखगे दरिद्रः
शुभे धनाढ्यः शुभखेटयुक्ते ।
राजा तथा स्वोच्चगते च तद्वत्
ग्रहैश्च दृष्टेऽपि धनाधिनाथः ॥१२$\frac{१}{२}$ ॥

नीचेन मन्देन फणीश्वरेण
दृष्टस्तथा स्यान्मरणाय बाल्ये ॥ १३ ॥

---

1. च. बल

तस्मिन् शुभयुते दृष्टे पूर्णमायुर्विनिर्दिशेत् ।
शुभपापग्रहैः दृष्टे मध्यमायुर्विनिर्दिशेत् ॥ १४ ॥

नीचैर्वा पापखेटैर्वा दृष्टे स्वल्पं विनिर्दिशेत् ।
तत्रापि क्रूरखेटांशछिद्रकोणे मृतिं वदेत् ॥ १५ ॥

तत्रापि तत्त्रिकोणस्थे नीचचन्द्रे मृतिं वदेत् ।
लवकेन्द्रे तु बलवत् लग्नं मृतिकरं विदुः ॥ १६ ॥

तत्रापि लग्नास्तमये बलाबलविचिन्तनम् ।
शुभानामेवमेव स्यात् प्रणाडी कालचिन्तने ॥ १७ ॥

**॥ इति श्रीबालात्रिपुरसुन्दरीकृपाकटाक्षसमधिगत समस्तविद्यावैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्नमालायां षोडशोऽध्यायः ॥**

सम्पद्दशां सम्प्रति शास्त्ररीत्या
वक्ष्ये बुधानां हितकारणाय ।
लग्नास्तनाथस्फुटयोगलग्नात्
तदीश्वराद्वोडुदशा क्रमेण ॥ १ ॥

समाः प्रकल्प्याः रविवद्विलग्न-
नाथस्य तत्खेटवशाच्च सर्वे ।
एवं कृता सा नवधा विभज्या
दशा तदीशात्तु फलाफलानि ॥ २ ॥

एवं च चन्द्रो यदि लग्ननाथ-
युतस्तथा क्रूरयुतोऽथ दृष्टः ।
दरिद्रयोगः शुभखेचरैस्तु
[1]तद्राजयोगं मुनयो वदन्ति ॥ ३ ॥

रव्यादितोऽत्र ग्रहशीलयोगम्
विचिन्त्यमाहुर्गुणनिर्णयश्च ।
आदित्यचन्द्रौ नृपती तनूजः
क्षितेस्तु नेता तनयो बुधः स्यात् ॥ ४ ॥

---

1. च. ग. क. स्याद्राजयोगो मुनिभिः प्रणीतः

शुक्रस्सुरेड्यः सचिवौ शनिस्तु
प्रेष्यो भुजङ्गस्तु स पाददासः ।
केन्द्राश्रितैरेवमवेक्षणीयम्
खेटैश्शुभैरप्यशुभैरथ स्यात् ॥ ५ ॥

निसर्गनक्षत्रजतद्भिदादि
विचार्य वक्तव्यमतन्द्रितेन ।
चन्द्रांशमारभ्य दशां च विद्वान्
अधीशचन्द्रान्तमवेक्ष्य विद्वान्[1] ॥ ६ ॥

तत्केन्द्रपानामपि तद्वदेव
नीत्वा फलानि प्रवदेदतन्द्री ।
[2]अथो फलाख्यां च दशां प्रवक्ष्ये
बलाबलात् खेटविलग्ननेत्रोः ॥ ७ ॥

खेटो बली चेत्तत एव नेया
बलाधिका लग्नपतेरथापि ।
ततस्तदीशो यदि तत्तदादि
क्रमेण नेया हि दशा सदापि ॥ ८ ॥

शुभाशुभान्याश्रयखेचरेण
प्रविष्टखेटेन च वा बलेन ।
काले विपश्चित् सततं सभायां
वदेदसाधारणतो विशिष्य ॥ ९ ॥

एतत्प्रकारेण हि लग्नतः स्यात्
प्रकारभेदेन दशाप्रक्लृप्तिः ।
खेटस्य केन्द्रस्थितखेचरोऽत्र
फलप्रदः स्यादिति शास्त्ररीतिः ॥ १० ॥

द्वित्रादिखेटैरशुभैश्शुभैर्वा
युते बलाभ्युन्नतखेचराद्वा ।

---

1. ङ. ग. पश्चात्     2. ङ. अथोपलाख्यां

न चेत् सुधीः भागगतात् खगेन्द्रात्
आलोच्य सर्वं प्रवदेत् सभासु ॥ ११ ॥

अन्तर्दशाप्रकारस्तु द्रेकाणक्रमतो भवेत् ।
सा चांशक्रमतो नेया क्रमव्युत्क्रमभेदतः ॥ १२ ॥

सा च द्वादशधा योज्या सुधियां फलसिद्धये ।
तं सूक्ष्मफलसिद्ध्यर्थं त्रिशद्धा तु वियोजयेत् ॥ १३ ॥

कारकोऽन्तर्दशायास्तु लवतो राशितः क्रमात् ।
आलोच्य सर्वं मतिमान् कदाचिन्न मृषा भवेत् ॥ १४ ॥

एनां दशां भाग्यवशाद्विपश्चित्
नयेदतन्द्री फलसिद्धिहेतोः ।
दशाक्रमं चात्र विदुर्मुनीन्द्राः
क्रमेण केन्द्रक्रमतश्च षष्ठात् ॥ १५ ॥

चरस्थिरद्वन्द्वगतेन चान्यत्
पूर्वोक्तरीत्या प्रवदन्ति सन्तः ।
दशाधिपस्याप्यथवा दशायाः
व्यये यदा [1]शुक्रभुजङ्गयोगः ॥ १६ ॥

खेटक्रमाद्वाप्यथवा स्फुटाद्वा
सर्वस्वहानिं प्रवेदत् तदानीम् ।
यदा युतो नीचखगैर्भुजङ्गः
वदेत् तदानीं बहुकष्टमेति ॥ १७ ॥

नीचेन सूर्येण युतो यदि स्यात्
वदेत्तदानीं [2]नृपदण्डमेति ।
चन्द्रेण नीचेन युतो यदि स्यात्
वदेत् तदा स्त्रीवधजापवादम् ॥ १८ ॥

तथाविधेनेन्द्रपुरोहितेन
युतो द्विजघ्नापयशोविनाशः ।

---

1. च. शुद्धभुजङ्ग    2. क. बहुद

शनौ तु नीचे भुजगेन युक्ते
चौर्यापवादेन भवेद्विनाशः ॥ १९ ॥

कुजेन नीचेन युते भुजङ्गे
स्यात् सोदरीसङ्गमजापवादः[1] ।
रवौ भुजङ्गेन युते तथोच्चे
द्रव्यादिनाशो न च[2] राजदण्डः ॥ २० ॥

चन्द्रे तथोच्चे कुलभामिनीनां
हृतिं वदेत् स्वस्य परस्य वापि ।
एवं खगानामपि चोच्चगानां
विचार्य सर्वं प्रवदेदवश्यम् ॥ २१ ॥

दशात्यये शोभनखेचरस्या-
प्याहुः मुनीन्द्राः विपदां बहुत्वम् ।
व्यये भुजङ्गेन्दुदिवाकराणां
युतौ तथा भुक्तिपदेन योज्यम् ॥ २२ ॥

राहूदये राहुदशाप्रसक्तौ
व्यये भुजङ्गेन्दुदिवाकरेषु ।
असौख्यजातं सकलं च विद्यात्
प्राणात्ययं वाङ्गविनाशनं वा ॥ २३ ॥

खेटाद्दशाया यदि चन्द्रशुक्रौ
धने तदानीं निधिलाभमाहुः ।
कुजो द्विजानामथ देवतानां
धनापहारेण भवेद्धनाप्तिः[3] ॥ २४ ॥

बुधेन वेश्याविदुषां धनाप्तिः
गुरौ शुभे न्यायपदाद्धनाप्तिः ।

---

1. च. जः प्र 2. च. नाशेन च

3. च ङ. क. वदेद्धनाप्तिम्

तथाशुभे ब्रह्मधनापहार:
　　मन्दे तु राष्ट्रापहृतं धनं स्यात् ॥ २५ ॥
राहौ तदाज्ञासमुपार्जितं स्यात
　　एवं धनाप्तिं प्रवदेद् दशायाम् ।
शुभैस्तु सम्पादितवित्तवृद्धिः
　　पापैस्तथान्त्ये व्ययमेति वित्तम् ॥ २६ ॥
नीचैस्तदन्यायपदेन नाशं
　　एवं हि सर्वत्र च योजनीयम् ।
यस्यां दशायां[1]धनगः फणीन्द्रः
　　शुक्रेण [2]युक्तो रविणा च दृष्टः ॥ २७ ॥
तस्यां दशायां नयनस्य हानिं
　　कुटुम्बहानिं च वदेदवश्यम् ।
शुभेन दृष्टे च शुभैर्युते वा
　　रोगाढ्यं नीचखगैस्तु राज्ञा ॥ २८ ॥
तथाष्टमस्थैरपि पापखेटैः
　　नेत्रद्वयस्यापि वदन्ति हानिम् ।
एकत्र चेदेकविलोचनस्य
　　हानिं द्वये नेत्रयुगस्य हानिम् ॥ २९ ॥
एवं विलग्नादपि लग्ननाथात्
　　द्रगाणतश्चापि विचिन्तनीयम् ।
भुजाधिनेता यदि नेत्रपेन
　　युक्तस्तथा क्रूरखगैर्युतश्च ॥ ३० ॥
वदेत्तदानीं स्वभुजेन नेत्र-
　　हानिं विपश्चित् प्रयतः सभायां ।
नेत्राधिपः शुक्रधने यदि स्यात
　　द्रेक्काणभे शस्त्रभवं विनाशम् ॥ ३१ ॥

---

1. ङ. धनगौ फणीन्द्रू　　　2. ङ. युक्तौ

रवेः द्रगाणे यदि नेत्रनाथः
क्रूरैर्युतो राजभयाद्विनाशः ।
नेत्रेश्वरे दण्डधरे द्रगाणे
एवं युतः क्रूरखगैस्तदानीम् ॥ ३२ ॥

काष्ठादिभिर्नाशमुपैति नेत्रं
ओजांशके त्वेकमुदाहरन्ति ।
युग्मे तु नेत्रद्वितयस्य हानिं
मेषांशके मेषपदप्रहारात् ॥ ३३ ॥

शीर्षोदयांशेषु च शीर्षतः स्यात्
पृष्ठोदयांशेषु च पादघातात् ।
एवं विलग्नेशदशेश्वराणाम्
आलोच्य युक्त्या प्रवदेन् मनुष्यः ॥ ३४ ॥

द्रगाणतो जातकवद्विचार्यं
पदाच्च केचित् समुदाहरन्ति ।
रोगाधिपेनापि युतौ तु नेत्र-
रोगं वदेत् शोभनदृष्टिहीने ॥ ३५ ॥

योगप्रदादेवमवेक्ष्य सर्वं
संवादतो निश्चयमेति विद्वान् ।
षड्राशयो लग्नभतो हि संख्याः
त्वन्ये तु लोके विपरीतभावाः ॥ ३६ ॥

**॥ इति श्रीबालात्रिपुरसुन्दरीकृपाकटाक्षसमधिगत समस्त-विद्यावैदुष्य श्रीकृष्णमिश्रकृतौ ज्योतिषफलरत्न-मालायां सप्तदशोऽध्यायः ॥**

---

# விராலிமலை வேலவர் காதல்

திருமுருகா வெனுமடியார் திருவுள்ளம்
மகிழ்வடைய திருக்கண் நோக்கி
வருமுருகன் வீற்றிருக்கும் விராலிமலை
வந்துதவம் கிடந்தாள் தன்னை
திருவுருவில் அணைந்தமுதத் திருப்பதத்தில்
தாய்மகிழ அணைத்துக் கொண்ட
பெருங்கருணை தனையுலகோர் பெறவேண்டி
இவணிதனைப் படைப்பிக் கின்றும்.

---

'சம்புநதிபாயும் திருப்பொதிகை மாமலைமேல்
கும்பமுனி நின்றுதினம் கும்பிடும் பொற்கோபுரத்தான்'

யார்! விராலிகிரிவேலன். அதுமட்டுமா? 'பாலாறு நெய்யாறும் பயங்கமலத் தேனாறுங் காலாறித் தங்கவரும் காராறுடையபிரான்' அல்லவா! அவனது விரைந்தோடும் தேரும் வீறுற்ற குஞ்சரமும்—பெருமைமிகு போர்ப்பரியும், முழங்குமணி மும்முரசும்—செஞ்சேவலங்கொடியும், சீர்பெருநற் சக்கரமும்—சூரன் உயிர் உண்ட சுடருற்ற வடிவேலும்—பிறவும் அடியார்க்கேயன்றி இதனை ஓதி உணர்வார்க்கும் காட்சியளியாநிற்பனவாம்.

'அன்னமடந்தோறும் அலைகமுநீராரேறுடிச்
செந்நெல் வயல்பாய்ந்து செழித்தோங்கும்' அவன் நாடு,
'வேலிக்கரும்பு வெடித்த முத்து செந்நெலுடன்
கூலிக்களந்து குலாவும் வயலூராம்' அவன் வீற்றிருக்குமூர்,

மாதமும்மாரியும், மாதவத்தோர் வேதமும் அவண் பொய்த்தலிலா திறன் ஆயவை அவன் திருப்பதியையடையத்தூண்டும் கோலாயமையும் சிறப்புடையனவாம்.

தேவர் முதல் பல்லோரும் பணிந்து நிற்க 'ஆடகப்பொன் மின்னார்கள் ஆடும் பதத்திலிட்ட—பாடகப் பொன்றுளிகள் படிநிறைந்து இலங்குவதும், 'பூசத் திருநாட்குப் பொற்காவடி கொணர்ந்து—தேசத்து மன்னர் திறையளந்து' விளங்குவது மாய அவனது அழகிய ஆலயமும், வைகாசி-வசந்தன் திருநாளில்

பலவகையணிகளும் மாலையும் விளங்க, இசையும், எச்சரிக்கையும் நிறைய அவன் பவனி வரும் சிறப்பும், 'தென்னைமரங்களெல்லாம் சிங்காரப் பெண்களுமாய்—மன்னர் வந்தாரெனவும் மாரிளநீர் ஏந்தி நிற்க'வும் இன்னபல இயற்கை யழகினிடையே பவனிவந்த முருகன் வீற்றிருக்குங் காட்சியும் நுகரப் பேரின்பமளிப்பனவாம்.

வேலனிடம் பேரன்பு பூண்டு அவண் தோழியருடன் தோன்றிய காமரசமாலை யெனும் நங்கையின் சிறப்பும், அழகும் கூறும் நீண்டபகுதி சிறந்த உவமைகளைத் தாங்கி மகிழ்வூட்ட வல்லதாகும்.

ஒருவரையொருவர் கண்டின்புறுதல், இருவருங் கூடிப் பிரிந்த நிலையில் அவளது நிலைகண்ட தோழியர் கூற்று, செய்தி யறிந்ததாய் மகிழ்வுற்று வாழ்த்துதல் இவற்றை எடுத்துக் கூறி மகிழ்விக்க வியலாதாதலின் படித்தின்புற வேண்டுவன்.

[மூலம் R. 5005.]

திருச்சி மாவட்டத்திலுள்ள விராலி மலையில் கோயிற் கொண்டுள்ள முருகபெருமான்மீது அன்பு கொண்டு பாடப் பட்டுள்ள இந்நூலின் ஆசிரியர் பெயர் முதலியன அறிய இயல வில்லையாயினும், ஆசிரியர் முருகன் அருள் நிரம்பப் பெற்று, ஆர்வம் மிகக் கொண்டு இதனை இயற்றியுள்ளாரென்பது

"அல்லும் பகலும்நிதி ஆராய்ந்தெடுப்பவர்போல்
சொல்லும் பொருளும் சுவையும் மிகத்தேடி
செந்தமிழைத் தானவர்மேல் செப்புந்தமியேற்கு
மந்திர அனுபூதி வரப்பிர சாதந்தருவோன்"

என்னுமடிகளால் நன்குணர இயலும்.

வேலன் அருள் கிட்டுக.

முத்தம்மாள் கௌரிநாதன், எம்.ஏ., பி.டி.,

# விராலிமலை வேலவர் காதல்

(காப்பு)

விண்பார் புகழும் விராலிமலை வேலவர்மேற்
பண்பா யொரு காதற் பாடவே—திண்பாரில்
வெற்பகமதைப் பொருத வித்தகர்தனைத் துணைகொள்
கற்பக மதக் களிறு காப்பே.

(நூல்)

பூமி மலைக்கெல்லாம் புகழ்சேர் விராலிமலை
சாமிமலை யென்றுகந்த சண்முகன்மேற் காதலுக்கே
சிந்தை மகிழ்ந்து திருவாக்குத் தந்தருளும்
தொந்தி வயிற்றைந்துகரத் தும்பி முகத்தோனே !
மன்று தோறும் மகன் தகப்பன் சாமியென்றே . 5

குன்றுதோறும் குருபரன்மேற் காதலுக்கே
மெய்க்கண் ணுமையவளே ! வேதாந்த வித்தகியே !
பொய்க்கண் ணிருளகற்றிப் புத்திகண் நீதருவாய்.
முராரிகிரி சம்புவயன் மும்மூர்த்திக்கும் துரை
விராலிகிரி சண்முகவே லாயுதன்மேற் காதலுக்கே 10

தட்சிணாமூர்த்தி சிவனே சபாபதியே !
பட்சமுடனே வீர பாகுவே முன்னடவாய்.
வெள்ளானை மாமன்மகள் மேலான தெய்வானை
தள்ளான் வள்ளிபுணர் சண்முகன்மேற் காதலுக்கு
மெய்யான காசி விசுவேசரைப் பணிந்து 15

பொய்யா விசாலாட்சி பொற்பாதத்தைப் போற்றி
செய்வேன்.

காலவயிரவய்யா ! காவல் தண்டேசுரரே !
மேலுமெந்தன் சொக்கலிங்க மீனாட்சி காத்தருள்வாய்.
பூதல விராலிப் பொருப்பிலுறை வேலவர் மேல்
காதலை யான்பாடக் கருத்தில் துணிந்த கதை 20

அன்னநடை போலகாகம் அன்று நடை கற்றதுதான்
மன்னுகின்ற வாறும் வழுத்துகின்றேன் வல்லவர்முன்;

முக்குற்றமுங் கடிந்த மூர்த்திதரு சண்முகவேள்!
எக்குற்றமும் பொறுத்து என்தமிழைக் கொண்டருள்வாய்.
பண்ணளந்த கந்தருவர் பாடலின்பம் வேடர்சொல்ல 25
விண்ணளந்து நிற்கும் விராலிகிரி வேந்தன்,
சம்புநதிபாயுந் திருப்பொதிகை மாமலைமேல்
கும்பமுனி நின்றுதினங் கும்பிடும் பொற் கோபுரத்தான்.
பாலாறு நெய்யாறும் பயங்கமலத் தேனுறும்
காலாறித் தங்கவருங் காராறுடைய பிரான்; 30
அசுவாதமோ கயிலை வாதி மனோ ரதமோ
விசுவாதமோ வெனலாம் விளங்குந்திருத் தேரான்;
சீறிப் படாகத்தை நூறிக் குடோரிக்கு
மீறித் துடாரித்து வீறுற்றகுஞ் சரத்தான்;
அண்டபகிரண்டமும் தீர்ந்திட யெழுமலியேழு 35
கொண்டலை யடர்ந்துலகு கொண்டுவரும் வரம்பரியான்;
எம்மண்டல மதனுள் யாவரையும் காப்பமென
மும்மண்டலமும் முழங்கும் மணி மும்முரசான்;
குறைமுடித்து தேவர் குடியேறி வாழ்கச்
சிறகடித்துக் கூவும்வெற்றி செஞ்சேவலங் கொடியான்; 40
ஆறெழுத்தையோதும் அடியார் திருவடியால்
கீறெழுத்தைத் தள்ளாக் கெடிநடந்துஞ் சக்கரத்தான்;
மாயாத சத்தி வடவா முகாக்கினியை
வாயாகவே சொலித்து வந்த கதிர் வேலன்;
கீரன் சிறையைக் கிரவுஞ்சகிரியைக் கடலைச் 45
சூரன் உயிரையுண்ணத் தொட்டவடிவேலன்;
சோலையிட மேவுமிளந் தோகைவள்ளி தெய்வானை
மாலையிட வாசம் வளர்கடப்ப மாலையினன்;
அன்னமடந்தோறும் அனைகழு நீராறேடிச்
செந்நெல் வயல் பாய்ந்து செழித்தோங்குங் கோனாடன்; 50
வேலிக் கரும்பு வெடித்த முத்து செந்நெலுடன்
கூலிக் களந்து குலாவும் வயலூரான்;
மாதமும் மாரி மழை பொழிய மாதவத்தோர்
வேதந்தழைக்கும் விராலி வளம் பதியான்;
நீறிட்டான்றன் மதிலை நீணிலத்திலே யடக்கி 55

யேறிட்டெழும்பி யிலங்கும் திருமதிலான்;
கூத்தராணிப் பகழிக் கூத்தன் பிள்ளைத் தமிழ்க்குக்
கூத்தாடுஞ் செந்தூரக் குழந்தை வடிவேலன்;
நெற்றிக்கண் கொண்ட திரு நீலகண்டன் மாதவத்தில்
வந்துதிக்கப் பெற்ற புத்திர மாணிக்கமான கந்தன்; 60

வெங்கய முகத்தாற்கும் வேள்வியளித்தார்க்கும்
துங்கநவ வீரருக்கும் சோதர சிகாமணியான்;
பூமணக்கும் வேந்தனையும் புஷ்பகவி மாரனையும்
வாமன சொரூபனையும் மாமனெனப் படைத்தோன்;
கைத்துணைவிற் பார்த்தனையும் காமனையும் பூமனையும் 65

மைத்துனவராக வான்முறையாய்க் கொண்டருள்வோன்;
சொர்க்க மத்திய பாதாள தொல் புவிச்செங்கோலாளத்
துர்க்கை மெய்க்கணம்மைபெற்ற சுபபிரமணியக்கடவுள்;
பட்டாபிஷேக இந்திர பட்டமெல்லாம் கட்டிவைத்த
அட்டாவதான மந்திர அட்டாங்கராச சிங்கன்; 70

ஆறிடத்திலே பிறந்து ஆறுமுலைப் பாலருந்தி
ஆறிடத்திலே வளர்ந்த ஆறுமுகப் பெருமான்;
கோனாய்ப் பதினான்கு கோடியுலகப் பரப்பும்
தானாய்ப் படைக்கவந்த சண்முக வேலாயுதனார்;
செகமேழைச் சுற்றித் திரும்பி நொடிக்குள்ளே 75

மகமேரைச் சுற்றிவலம் வந்தமயில் வாகனத்தான்;
ஊழிப் பிரளய வுகாந்தம் முடியாமற்
கோழிப் பதாகைநின்று கூவியுலகாதரிப்போன்;
தெய்வானை வள்ளிபங்கன் சேர்ந்தார்க் கருள்புரியும்
சைவாகமஞான சம்பந்தமாமூர்த்தி; 80

இந்திரலோகத்தின் மிசை யேறிவந்த சூரனுக்கு
மந்திரஞானங் கொடுத்து வாகனமாய்த் தானமைத்தோன்;
சம்புவுக்கும் நான்முகற்கும் சந்திப்புலவனுக்கும்
கும்பமாமுனிக்கும் குருமுகிர்த்தங் கொண்டபிரான்;
நாதத் தியானசெப நக்கீர தேவனுக்கோர் 85

பூதத்தினாற் கர்வ புத்திமத மடக்கி
வேலூன்றிக் கற்சிறையை மீட்டவன் சொற்பாட்டதற்குக்
கோலூன்றிப் பையவந்த கோலப் பழங்கிழவன்;

பார்த்ததைச் செய்தவர்க்கும் பக்தி செய்தவவ்வையர்க்கும்
நாரதற்கும் கரந்த நவினற் கதைப்பொருளான் ; 90

அருணகிரி சொற்பதி னுயிரஞ் சந்தப்புகழும்
கருணையுடன் பன்னிரண்டு காதாற் கேட்டவள்ளல் ;
திருமுருகாற்றுப் படையைச் சிந்தை செய்யுந் தொண்டர்
வருமுருகா வென்னுமுன்னம் வந்த மயில்முருகன் ;
பண்டைமானைத் துரத்தி பாணத்தினலடித்த 95

தொண்டைமானுக்குத் துணையிருக்கும் வேல்முருகன் ;
அல்லும் பகலும் நிதி ஆராய்ந் தெடுப்பவர்போல்
சொல்லும் பொருளும் சுவையும் மிகத்தேடி
செந்தமிழைத் தானவர்மேல் செப்புந் தமியேற்கு
மந்திர அனுபூதி வரப்பிரசாதந் தருவோன் ; 100

சாகாத கல்வியும் செந் தாமரைப் பெண்ணென்னை விட்டுப்
போகாத செல்வமும்வை போகசுகமுங் கொடுப்போன் ;
எவ்விரதமுங் குமரர்க் கேபிரீதி யென்பவர்பால்
அவ்விரதமேற்றவர்கள் அனுக்கிரகஞ் செய்தருள்வோன் ;
மண்ணில் யாவருக்கும் வைத்திய சிந்தாமணியாம் 105

கண்ணிலாருக்கும் வந்து கண்கொடுக்கும் காரணிக்கன் ;
அடியார் நினைத்தபடி அங்கங்கேயிருந்து
குடிகாவலாளுங் குமரப் பெருமானர் ;
காமதேனுக்கு மன்பர் கற்பக் சிந்தாமணிக்கும்
நாமதேயங் கொடுத்து நாட்டுமருள் கொடையான் ; 110

மந்திரத்தில் சித்தன் மருத்துமலைச் சஞ்சீவி
எந்திரத்தில் மாயாண்டி யென்னும் குருசாமி ;
பொய்யனுக்குப் பொய்யன்வலுப் பூட்டக்கமாய சித்தன்
மெய்யனுக்கு மெய்யன் வெற்றி வேலாயுதக் கடவுள் ;
ஆதித்தன் வெண்ணிலவு அரணில்லாதித்தனுமாய் 115

பேதித்துப் போனலும் பொய்யுமருள் போகாதான் ;
மல்லிழைக்கும் பானுவைவா வென்றழைக்கு மாணிக்கக்
கல்லிழைக்குந் தங்கக் கதவுநிலை வாசலினன் ;
வேததன நாயகர்தா மெச்சு நவ வீரர் தங்கள்
பூததன சேனையுடன் போற்றிநிற்கும் வாசலினன் ; 120

அத்தனரி பிரம்மன் ஆதிசேடன் மறலி
சத்தரிஷி முனிவர் சந்திக்கும் வாசலினான்;
அஷ்ட வயிரவரும் அஷ்டதிக்குப் பாலர்களும்
கட்டளை யிட்டபடி காத்திருக்கும் வாசலினான்;
மூவேந்தரும் வணங்க மூவுலகையாளுகின்ற 125

தேவேந்திரன் வந்து தெண்டனிடும் வாசலினான்;
ஆடகப்பொன் மின்னார்கள் ஆடும் பதத்திலிட்டப்
பாடகப் பொன்றுளிகள் படிநிறைந்த வாசலினான்;
பூசத்திரு நாட்குப் பொற்காவடி கொணர்ந்து
தேசத்துமன்னர் திறையளக்கும் வாசலினான்; 130

சிந்தையெங்கும் போகாமல் சேர்ந்தவஷ்ட லட்சுமிப்பெண்
பந்தயங்கள் சொல்லிநின்று பந்தாடும் வாசலினான்;
வெண்ணீறு தந்து வினையை நீருக்கியபின்
தண்ணீருடன் துன்பஞ் சாதிக்கும் சன்னதியான்;
ஆதிமறை நான்குடனே யாகமங்களுஞ் சமைய 135

நீதி மனு நீதி நிறைந்து வளர்நாள் தனிலே
வைகாசிமாதம் வசந்தன் திருநாளில்
வையம்புகழும் நல்ல மங்களவாரந்தனிலே
விந்தைக் கலாபமயில் வீராதிவீரன் எங்கோன்
அமுதச் சரவணத்தில் மூழ்கியெழுந்திருந்து 140

காசியும் சேதுநதி கங்கைநதி தானுடி
ஆசபானங்கள் செய்து வாயிராரோக்கியமுடன்
அத்தியானம் பஞ்சாங்க மாகாதியந்தணர்க்கு
நித்தியதானங்கொடுத்து நேமநிட்டையுமுடித்து
தேவர்குழாமும் சிவனுந்திருமாலும் 145

மேவுகணேவேளும் இலட்சம் குமாரர்களும்
செவ்வேளும் விண்ணமுதந் தேனுந் தினைமாவும்
ஒவ்வமனதுக்கு உகந்ததெல்லாந் தானருந்தி
தட்டும்புனுகு சவ்வாதணிந்து சண்முகற்குப்
பொட்டுக்குட கஸ்தூரிப் புண்டர கீற்றுந்தரித்து 150

கடைக்கண்ணுக்கு மையெழுதிக் கந்தனுக்குச் செம்பொன்
துடைக்கழகு சல்லடமுந் தொட்டதின் மேற்றட்டிகட்டி

சொந்தமாம் வேலவர்க்குத் தொண்டைமான் வாங்கியவர்
தந்தமாமென்று வனுப்புந்தமான் போட்டு
கெண்டைகட்டும் கன்னியர்கள் கிட்டிவழி கட்டுதற்குக் 155
கண்டைகட்டும் பொற்சரிகை கட்டுவர்க் கந்தானுடுத்தி
அபரஞ்சிப் பொன்னெழுத்து வங்கி நடுக்கட்டுச்
சபைரஞ்சிதமாய்த் தகதகென வேதரித்து
வரமிக்க பானுமதி மண்டலமெல்லாம் மயங்கி
பிரமிக்க பிரபைசெய்யும் பீதாம்பரந்தரித்து 160
முச்சுடருமொன்ருய் முளைத்துதையம் செய்வதுபோல்
பச்சைவச்சிரமாணிக்கப் பைம்பொன் மகுடந் தரித்து
காலைக் கதிரவனைக் கண்ணைப் பரிப்பதுபோல்
கோலக் குழைக்கிற்றள குண்டலமுந்தான் தரித்து
முத்து முருகையன் முகமிலங்கப் பொற்காதில் 165
கொத்து முருகுங் குமரர் முருகுந் தரித்து
க்தியிற் சிறந்த கதிர்காமம் தன்னில்
நதியிற் சிறந்த நவரத்தின கண்டியிட்டு
தோகை மெய்க்கணன்னையிட்ட தும்பிப்பதக்கமுடன்
நாகரத்தினம் வைத்த நளபதக்கமுந்தரித்து 170
கொத்துச் சரப் பணியுங் கோருதருத்திராக்ஷ
முத்துச் சரத்துடனே முன்மார்பிலங்கவிட்டு
ஏகநிஷ்டையானவர்க்கு யெக்கிஞேம விதமிட்டு
வாகை தொட்ட தோட்குவச்சிர வாகுவலையந்தரித்து
முன்கைமுதாரி முடுகுகடையங்காப்பும் 175
கங்கணச் செங்கைக்குக் கணையாழியுந்தரித்து
பட்டை அரைஞாண்மேல் பளபளெனக் காந்திமின்னல்
இட்டெரிக்கும் ரத்தினவொட்டி யாணமிடைக்குப் பூட்டி
தங்கச் சிலம்பு தண்டை தாளுக்குக் கிண்கிணியும்
சிங்காரமாய் விரற்குச் செம்பொன் மிஞ்சியுந் தரித்து 180
வெய்யவர்களீராறு மேலாறு சந்திரரும்
மெய்யுமுகமுமாய் விளங்குவது போல் விளங்க
மாமாலையாங் கடப்ப மாலைமணம் வாடாமற்
பூமாலை யெல்லாம் பொருந்தவேதான் சூட்டி
படம்புனையும் வீரபராக்கு கயிலருக்கு 185

யிடும்பன்பராக் கெனவும் எச்சரிக்கை கூறிவர,
துந்திமிடக்கை துடிநவுரி பம்பைமுதல்
விந்தைதருபதினெண் மேளத்தொனிமுழங்க,
தம்பூரு வீணை சரமண் டலந்தொடுத்து
கிம்புருடர் கின்னரர்கள் கந்தருவர் பாடிவர, 190

சல்லி சலாகுஞ்சகு சாமரம் பொற்பாவாடை
வல்லியரனேகர் மயில்விசிறிவீசிவர,
பொன்னடப்பைக்காளாஞ்சி பொற்குடைபொன்னாலவட்டம்
மின்னுதங்கத் தீவட்டி விண்ணோர் பிடித்துவர,
வெங்கத்தூரணென்பவரை வெவ்வாய் விரித்துருமுஞ் 195

சிங்கத்தூணட்டிச் சிறந்தபுது மண்டபத்தில்
சித்திரநவரத்தினமணிச் சிங்காசனந்தனிலே
சத்துருசெயசங்காரன் சண்முகவேள் வீற்றிருந்தான்.
வீற்றிருந்த சண்முகவேள் மேதினியுள்ளோர்களெல்லாம்
போற்றிசெய்யவும் பவனி போய்வரவும் வேண்டுமென்றார் 200

மெய்க்கண்ணம்மைதந்தவெற்றி வேலுஞ் செங்கோலுமலர்
கைக்குட் பிடித்திறங்கிக் கந்தன் மனமகிழ்ந்து
கொட்டமிட் டடிசிறுத்துக் கொக்கரித்துடல் பெருத்து
வட்டமிட்டுசுற்றுமயில் வாகனத்திலேறுகின்றார்.
காளைநவ வீரர்களும் கட்டியரைநோக்கிமற்றப் 205

பாளையமும்பூதப் படைபவுசு முன்னடக்க,
வேழ முகத்திலொரு வெண் மருப்புத் தானிலங்கப்
பேழை வயிற்றண்ணல் பெருச்சாளியேறிவர,
வெள்ளி விடையேறி வியாழம் புனைந்துவர
உள்ளம் மிகமகிழ்ந்து உம்பருடன் கூடிவர, 210

குருந்தேறி பெண்களது உயிர்கொண் டொளித்தகள்வன்
பருந்தேறிவேதனன்ன பட்சிமே லேறிவர,
நான்குலட்சத்து நான்கு ஆயிரவர்
வேலவர்க்கு முன்னாக வேதாகமம் புகல,
மிக்கான நாரதரும் வீணைசர மண்டலமும் 215

எக்காளம் நாகசுரம் ராச சின்னந் தான்முழங்க,
கோடை வருடத் திடியும் கொண்டல்முழக்கமும்போல்
நாட்டிய பேரி நப்பத் தொனி முழங்க,

காவல்ரம்பை மின்னார்கள் கனககும்பமேந்திவரத்,
தேவரம்பை மின்னார்கள் திருநடனமாடிவர, 220

சந்தப் புகழ்படித்துச் சைவத் தலைவரெல்லாம்
வந்திக்க ஞான வரோதயன் முன்னாகவர,
கோலக்குடை சுருட்டிக் கோடானகோடிவகை
வேலைக்குள்சூரியன்போய் வீழ்ந்ததற்கொப்பாய் நிழற்ற,
வெண்ணீருய் வந்துதலை விண்ணவர்கள் சேவைசெய்து 225

கண்ணீராயானார்கள் கையீராறுந் தெரிந்து.
மெய்யர்பராக்குவெள்ளி வெற்பான பன்னிரண்டு
கையர் பராக்கு முரு கையர் பராக் கெனவும்,
காணுபராக் கவரும் கண்டார் பராக்கயிர
பாணுதெண்டாயுத பாணி பராக் கெனவும், 230

பந்தர் பராக்குசம் பந்தர் பராக்கு மயில்
கந்தர் பராக்குச்சக நாதர் பராக் கெனவும்,
கோடர்பராக்கு வஞ்ச மேரர் பராக்குயதி
காரர் பராக்குவலங் காரர்பராக் கெனவும்;
மாரர் பராக் கழகு மாரர் பராக்கு வெற்றி 235

தாரர் பராக்கு அவ தாரர் பராக்கெனவும்;
வேலர் பராக்கு மயில் வீரர் பராக்கசுரர்
காலர் பராக்கு நெற்றிக் கண்ணர் பராக்கெனவும்
வேதர் பராக்குமனு வேந்தர்விராலிகிரி
நாதர் பராக்குவள்ளி நாதர் பராக்கெனவும் 240

கட்டியங்கள் கூறிவரக், கர்த்தன் குடையடியில்
ஒட்டிய செந்தூளி உலகேழையு மறைத்துப்
பின்னுலகு காட்டிப்பிர காசிக்கப் பேருலகுப்
பொன்னுலகம் போற்றிப் புகழப் பவனிவந்து
பண்ணைவயலோங்குதென்னம் பாடி வைகாபுரியாய்க்
கண்ணிறைந்த சிங்காரக் கற்பகப் பூங்காவனத்தில் 245

எண்ணறியாரத்தினத்தை யிட்டிழைத்துப் பட்டையிட்ட
வண்ணமணித்தூணுட்டி மண்டபத்தில் வீற்றிருந்தார்.
தென்னை மரங்களெல்லாம் சிங்காரப் பெண்களுமாய்
மன்னர் வந்தாரெனவும் மாரிளநீர் ஏந்திநிற்க, 250

அன்னமுளரிப்பூ வரும் பலாத்திநீர்முகந்து
பொன்னையன் பாதம் போற்றி வணங்கிநிற்க,

காவன நாட்டிந்திரர்க்குக் கனமருகன் சண்முகவேள்
பூவனம் வந்தாரெனவும் புன்னையெல்லாம் பூச்சொரிய,
தென்றல் மலர பன்னீர் திவலைமணம் பூந்தாதும் 255

குன்றுருவ வெய்தார்க்குக் கொண்டுநின்று வெப்பகற்ற,
நாகணமும் பூங்கிளியும் நாகரிக வேலவர்மேல்
மோகன சிந்துபதங்கள் முன்னிருந்து தான்பாட,
வேடிக்கை வேலரின்னம் விசித்திரம் உண்டெனவும்
நாடிச்சிங்காரவனம் நண்ணியிருக்கும்பொழுது, 260

ஞானப்பதுமினிக்கும் ராசப்பதுமினிக்கும்
வானப்பதுமினிக்கும் மானநிறைப் பத்தினிப்பெண்
நாமசரங் கேட்பர்செவி நாராசம் போலபாயும்
காமரசமாலை என்னுங் கன்னியொரு பூங்கோதை
தேகத்தைப்பண்ணித் திருத்திஞல் நோகுமென 265

யாகத்தீப்பண்ணி யயன்படைத்த ரூபவின்பம்;
காலையுச்சி மாலையிலும் கண்டவரைக் காய்ந்தோடி
வேலைப் புகுதாமல் விளங்குகின்ற செங்கதிரோன்;
தீயமுதம் பொங்கியுடல் தேயும் நிலவைப்பழித்து
வாயமுதம் பொங்கி வளருகின்ற வாலசந்திரன்; 270

மேகலோகத்திருளை வீறடக்க வேணுமென்று
நாகலோகத்தில் வந்த நந்தாமணிவிளக்கு;
ஞானம் உணர்பவர்க்கு நல்லசிவ யோகிகட்கு
மோன முனிவருக்குங்கிட்டாத மூலமந்திரம்;
தேவர் அருந்தாமல் தெண்டிரையில் நண்ணுமல் 275

பூவுலகிலுள்ளோர்கள் போற்றவந்த தெள்ளமிர்தம்;
கற்பகமுஞ் சேர்ந்தவர்க்குக் காஞ்சிரங்காய்ப் பாய்ந்ததிந்த
கற்பகமுஞ் சேர்ந்தவர்க்கு நஞ்சுதவாக்காமதரு;
மீறிக் கடல்பிடித்து மேவிமலையேறித்
தூறித் திரியாத சொர்ணன் நிறமேகம்; 280

நாட்டவர்கள் கண்ணிமைக்குள் நண்ணிவிண்ணிற்போய் மறையா
நாட்டவர்கள் கண்ணிமைக்குள் ஆடுங்கொடியமின்னல்;
பாம்புக்கு அஞ்சிப் படைமதனன் தோரகி

ஆம்பிக்க வேடர் அளையா இளந்தேறல்;
கோடைப் பரிமளித்துக் கொம்பலராமற் சுகந்த 285
வாடைப் பரிமளித்து வாசிக்குஞ் சந்தானம்;
பட்சியன்னமென்றால் பறந்தோடிப் போகாமல்
பட்சியன்னமென்றால் பகிர்ந்துண்ணும் பேடையன்னம்;
மேகத்தைக் கூவி விறகச்சிறகு தரிப்
போகத்தைக் கொத்திப் பொசியாத தோகைமயில்; 290
கானவர்கள் கண்ணியிலுங் காமுகர்கள் கண்ணியிலுந்
தானிலே சிக்கித் தளராயிளங்கவரி;
தொட்டுப் பொட்டிட்டுத் துடைத்தழித்துப் போடாமல்
எட்டுதிக் கெட்டுக்குள்ளிருந்து கமழ் சவ்வாது;
பண்ணுமர வீணையினுட்பட்டு விலைப்பட்டலையா 295
தெண்ணுமதுவுக்கா யிணையில்லாக் கஸ்தூரி;
நாற்றுவிட்டுப் பாத்திகட்டி நட்டதற்கு நீர்பாய்ச்சிக்
கூத்திக்குழல் முடிக்குக் கொய்யா மருக்கொழுந்து;
அடிக்கரும்பு விட்டு அளவளவாய் வெட்டி
முடிக்கரும்பு நட்டு முளையாத செங்கரும்பு; 300
சித்தருக்குமாருதிக்குந் தேவர் தபோதனர்க்கும்
முத்தருக்குங் காணு முளையாத சஞ்சீவி;
மற்றயிலைச் சாறதனை மண்குகையில் விட்டுருக்கி
சித்தர் பதினெண்பேரும் செய்யாரசக்குளிகை;
தரிசித்த போதினிலே செம்பிரும்போடிப் பாயும் 305
பரிசித்து சோதிப் படரும் பசுந்தங்கம்;
வயிரங்கியாள் தந்த மால்வயிரவேளுக்கு
உயிரங்கியாய்த்தரித்த உண்மைக் கலைக்கியானம்;
மாதர்கள் சிரோன்மணிநன் மாதவர்மனோன் மணிபொன்
மாதன் சிந்தாமணிபிறர் மாதலத்தில் நாகமணி; 310
ஆர்க்குமிவளாசைநிதி யாற்கலில மாகாசந்தி
நீர்க்குளாகா சந்தி யேற்குமோதேசரதி!
மதனனிலைச் சூத்திரம் மதனகலை சாத்திரம்
மதனனிருநேத்திரம் மதனகுருக்ஷேத்திரம்
ஐவர்க்கிரா அமலன் ஆடையுறியாமல் 315

பொய்வைத்தொருசொல் புகலாத்துரோபதைப்பெண்,
கல்லுருகொண் டிந்திரன் மால் கைபட்டுக் கால்பட்டு
நல்லுருகொண் டேகாமல் நண்ணும அகலிகைப் பெண்,
தாலிகட்டிச் சுக்கிரீவன் தம்பியிருக்கத் தமையன்
வாலிகட்டிக் கொள்ளமனம் ஒவ்வாத தாரகைப்பெண் 320

கோலிநின்ற மன்னவர்க்குக் கோமான யோத்திமன்னன்
தாலிகண்ணில் காணுமல் தரித்தருளுஞ் சந்திரமதி
யேது உவமை சொல்லி இசைந்தாலுமெத்தயிந்த
மாதுஉவமை என்ருல் வடிவுமே என்ன சொல்வேன்!
வித்தக சங்கத்தைமுன்னம் வென்ற திருவள்ளுவனுர் 325

புத்தகத்தை யொத்ததன பொற்பலகைக் கொப்பாகி,
பொற்ருமரைக்குட் புகுந்ததனைத் தங்கவொரு
சிற்ருமைபோல சனித்துப் பின்னஞ்சுதலை
சேடன்நிகர் எனவும் சென்றவன்தன் சென்னிவிரித்
தாடும் மடக்கு மழகாம் பதயுகத்தாள்; 330

தங்கம் நிறுக்கும் தராசுமணிச்சிமிழும்
கொங்கை விழும்பாளையினுங் குரும்பைநிகர்பாடாள்;
கண்ணீர் பதிக்கும் மலர்க் கைச்செண்டு போலானுர்
பண்ணிப் பதிக்கு மணிப் பந்தின் குதிக்காலாள்;
பந்தையெய்ய மன்மதவேள் பாணமெடுக்கிறவறி 335

வந்தங் கிருந்த பஞ்ச வர்ணகிளிக் கூட்டை
வேழத்துதிக்கைகொடு மீப்பதுமொப்பாகுமவள்
வாழைத்துடையும் வரலாங் கணைக்காலும்,
கம்பவேழுந் துதிக்கை காட்டுங் கவானகல
தம்பாரித் தட்டிலிட்ட ஆசனப் பூந்தாமரையோ! 340

தாமரையோ னேற்றத் தயவுவர சண்முகர்க்கு
காமரசமாலை கற்பித்த புட்பகமோ!
புட்பகமோ தென்றல் புகுதுமலர்க் குகையோ
அற்புதமோ காமதுற்கை ஆலயத்துட்டாபிதமோ!
ஆலடிக்கீழ் நாகமடைக் கிடப்பதோ வதுவின் 345

வால்மடக்கி யாடும் வடிவழகுமொப்பாமோ!
பொற்றட்டில் கீரைவித்து போட்டதுபோல் ரோமதளம்
பெற்றுச்சுரதமது பெருகுங்கடி தடத்தாள்

அந்தரத்தில் முன்னங்கு அவதரித்ததோவலது
தந்திரத்தில் செய்தவன்தன் சாத்திரத்தில் சூத்திரமோ! 350

கண்டு காணுத களவே களவதனை
உண்டில்லை யென்று முறையோஒறை கடந்து
காட்டிமறைக்கும் கவிங்கத் துடியிடையை
மாட்டிஇழுத்து வளைக்குமுந்திச் சுழியாள்
சுழிகண்டு பாற்கடலில் தூங்காமல் வல்லிரவில் 355

களிகொண்டமாலோ கருப்பு ரோமத் தொழுங்கு!
தெல்லுபோல் வட்டச் சிமிழ் போலடிகனத்து,
வில்லைப்போல் நீண்டு, மருப்பைப் போல் கூர்மைகொண்டு
செப்பைத் திருத்தித் திரண்டபங்தைத் தானடக்கி
பொற்புட்டிணைத்துப் பொருமிப் பூரித்துவிம்மி, 360

கோட்டைவரியில் கொம்மை க்ளைத்தட்டிமணல்
மேட்டைத் திருத்தி மதவேழ மெனமீறி,
கும்பத்தைவைத்துக் குடத்தைத் தகர்த்துடைத்து,
இன்ப இளநீரை ஈரக்குலை பிடுங்கி,
செண்டுபோலே யெழும்பச் செம்பொற்கிரி வணங்கி, 365

கண்டுஉக்கிர பாண்டியன்றன் கைச்செண்டா மென்ன
வெண்ணி,
பொன்மகுடம் நல்கிப், பொருசக்கரவாகமும்வந்
தென்வயிரந் தீர்ப்பதெப்போ இந்திரனே என்று சொல்லி,
பூங்களபத் தேமலெனும் பொற்பூச் சொறிந்து நிற்கக்,
கோங்கரும்பைக் காண்பார்க்குங் கோலக் குவிமுலையாள் 370

சொர்ணன் கோலக் கோயில் துறவுகோலுங் காமன்
கன்னக் கோலுக்குமவன் காந்தளுக்கு மொவ்வாமல்,
செம்பவளத் துண்டதனில் செந்தாமரைப்பூத்து
பொன்பவளக் கோர்வை புனைந்திருக்கும் செங்கையினுள்
பணைக் குழலைமூங்கிலுடன் பச்சை நிறம்போன்ற 375

கணைக்கரும்பு தோளெனலா மகங்கணமும் தாங்காதே!
தோளுக்கு நல்லதுணை என்று சொல்லியிமை
பாளைக் கமுகைப் பதித்துவைத்த கந்தரத்தாள்
விண்முகத்தைப் பார்த்தலர்ந்து வெம்பிமுகம் வாடாமல்
சண்முகத்தைப் பார்க்கவந்து தங்குங் கமலமுகம் 380

படிக்குள் சிவந்த பவளமிது வென்றால்
மடிக்குஞ்சுருளும் மதுவும் கொடுக்காதே!
பவளத் துறையில் படுபாத்தி யின்பமுத்துக்
கவலைப்படாமல் கரையில் ஒதுங்கியதோ!
முத்து நிறைக்கு நடு மூரலிரு வச்சிரத்தைப் 385
பத்திமுகப்பில் படிமானம் செய்ததுவோ!
வெண்ணகையைக் கண்டவுடன் மேனகையும் பூணகையும்
கண்ணகையும் நானுமவள் கண்டுமொழிக் கென்ன
சொல்வேன்!
சாந்தம் புனுகுசவ் வாதணிகபோலமவிர்க்
காந்தமோ சீனத்துக் கண்ணாடியோ வறியேன் 390
நாசிமுகமழகும் நங்கைக்குக் கந்தர்திரு
வாசிமுகமழகும் மணிக்குமிழு மொப்பாமோ!
வள்ளைத் தண்டென்றும் நெடு வள்ளைக் கொடிதடத்துள்
பிள்ளைச்சங் கென்றுவமை பெற்ற மகரக்குழையாள்
வள்ளைக் குளந்தனில் நீர் மான்குடிக்க வெய்துமென 395
கள்ளப்புன வேடர் கண்ணிவைக்குங் கட்கடையாள்
ஆலமும் பெற்று அலைபெற்று நீரூரில்
நீலமுந்தாமரையும் நித்திலமுஞ் செங்கொடியும்
மையுருவக் காரும் வளையுருவத் தெள்ளரவும்
பொய்யுருவ மாலும் பொருந்து மணிக்கதிரும் 400
தங்கியிருப்பதனால் சாகரமாய பேரைத்தப்பாக
கங்கமத்திங்கட்டுங் கரைபோலுங் கட்கடையாள்
வருணபகவானை வாவென்று மால்தெளிக்கும்
தருணத்திலீந்த தனுசாமிரு புருவம்
கோணப்பிறையை யெட்டிக் கூப்பிடப் பொற்சுட்டிகட்டி 405
காணப் பிறைபோல கருத்துருக்கும் நன்னுதலாள்
காரஞ் சிவந்து நம்மைக் காரஞ்செய்யாமலுமே
காரஞ்சலென்று நமஸ் காரஞ்செய் கார்குழலாள்
கற்பிக்குமோவியமும் கல்லுருக்கொள் மோகினியும்
பொற்படிக் குப்பின்னே தொடர்ந்துவரும் பூங்குயிலி 410
நீலாம்புசவேணி நேயப்பிராணசகி
நாலா கரைதெரிந்த நல்ல உயிர்ப்பாங்கி

தன்னுடனே யின்றிரவு தையலே கண்டகனு
உன்னுடனே சொல்லுகின்றேன் உண்மையாய்க்
கேளுமென்றார்
செண்டுமுலைக் கந்தருவத் தெய்வகன்னி போலொருபெண் 415
கொண்டுவந்து என்கையில் கொடுத்தாள் மணிவிளக்கை
வாங்கி முலை மேலணைத்து வைத்தேன் மடிமீது
பூங்கிளிய தொன்றுபசும் பொன்வடிவமாய்ப் பறந்து
வாயிதழைக் கோதி வலமுலைக் கண்ணைக்கோதி
தாயகமாய்ப் பேசுகின்ற சாடைசெய்த விந்தைகளை 420
என்னென்று சொல்வேனென்று எண்ணி நெடுமூச்
செறிந்தாள்
பொன்னழகி நீலாம் புசவேணி யேதுசொல்வாள்
கற்புக்குவித்தேநம் கன்னியர்க்கு நாயகமே!
வெற்புக்குள் சித்தர் விடுமாய மோவறியேன்
காலைக்கனவு முன்னோர் கையிற்பொருளெனவும், 425
ஞாலத்தில் சொல்வதுவும் நங்கையே பொய்யாமோ!
என்றாளதுகேட்டு இருந்த திருவரசி
நன்றாகித் தீதாகில் நாமென்ன செய்வோமென்றாள்
மையல்பெண் காமரச மாலையெனும் மாதரசி
பையச்சகியாருடன் பந்தாடலை நிறுத்தி 430
பாங்காய் வனங்குலவும் பங்கயப் பூவாவிகளும்
பூங்காவனங்களெங்கும் பூவெடுக்கப் போவோமென்றாள்
சொந்தப் புறமாதர் சூழநல்ல தோழியரோ
டந்தப்புறமாது அலங்காரச் சாலையென்று
வங்காளப் பச்சைகொச்சி மஞ்சளெல்லாஞ் சேர்த்தரைத்துக் 435
குங்குமப் பொன்மேனி குளிரவேதான் குளித்து,
துய்யக் கனகச் சுடரொளி குலாவவொரு
செய்யகனகப்பட்டு சிற்றிடையினில் தரித்து,
பன்னீரால் தேகசுத்தி பண்ணிதிலக் கண்ணாடி
தன்னில் முகம்பார்த்தந்த தார்குழலி தானிருக்க 440
தாதிசிலர் செவிலித் தாயர்சிலரும் பரிந்து
கோதில் குழல் சீவிக் கொண்டைச் சடைதிருத்தி

பாங்கி சிலர் நற்புனுகு பன்னீர் சவ்வாது கந்தம்
பூங்கலவைச் சேற்றை யள்ளிப் பூசையிலே பூவைசிலர்
பூசலாம் வண்டுவந்து பூசலாம் நாவணத்தில் 445

ஏசலாம் நன்மையது வேசலாம் செய்யுமென்றார்
கொண்டைப் பூணென்னும் ரத்தினக் குப்பாயமுந்தரித்து,
விண்டதற்கு மேலுச்ச மின்னவட்டக் குப்பிகட்டி,
நெற்றிப் பிறை மேல் நிலாவும் பிறையுமிட்டுச்,
சுற்றிப் பிறையணிந்த சோதிவச்சிரச் சுட்டிகட்டி, 450

பூட்டம்பில்லாதப் புருவச்சிலைநுதற்குத்
தீட்டம்புதவுதல்போல் சிந்தூர நாமமிட்டு,
அஞ்சம்புவேளிதயத் தஞ்சனமாங் கண்களுக்கு
அஞ்சனமிட்டாரவள்சிங் காசானத்திலேயிருக்க
வாக்குக்கொடுத்து ரிஷி மங்கைமாரெல்லாருக்கும் 455

மூக்குக் கொடுத்தவள்தன் மூக்குக்குமுத்தணிந்து,
வண்டலையா நீல மலர்பூத்த பச்சைவள்ளைத்
தண்டலையுங் காதில் சவடிக்கடுக்கனிட்டு,
மாதுக்குருக்குமணி வாசல் மணியஞ்செய்யவும்
காதுக்குருக்குமணி கண்மணிக்குத்தான் தரித்து, 460

மாலீடொருவர்சொல்ல மாட்டாமலே மயங்க
மேலீடொருவலிட்டு மின்னலன்ன பூத்தரித்து,
ஒப்பிட்டால் சூரியனை ஒப்பிடவுஞ் சோதிரத்தினக்
கொப்பிட்டார் கண்டுநின்று கும்பிட்டான் மன்மதவேள்.
சொர்ணம் வைக்கும்மேனிநிறச் சோதிமின்னைக் காவில்
மதன் 465]

கன்னம்வைக்காமல் கருப்புக் கன்னத்தில் சத்தையிட்டு
வெட்கட்டும் பூங்கமுகு மின்னட்டுங் கந்தமென்று
உட்கட்டும் செம்பொன் உருகூட்டுந் தான்தரித்து,
முத்துவடம்பச்சை முழுவயிரத்தாவடமும்
தொத்துவடம்செம்பொன் துணைவடமுந்தான்தரித்து, 470

மோதுகேசமுகத்தில் முகப்படாகம் போல
மாதுகேசமுலைக்கு மாணிக்கக் கச்சணிந்து,
திருக்கண்டமாலையுடன் செகமோகனமாலை

